भाव स्यादित्यतोऽस्ति क्रिया, तद्विपक्षभूता चाक्रियेत्येवं सज्ञा निवेशयेदिति ॥ १९ ॥

तदेवं सक्रियात्मनि सति क्रोधादिसद्भाव इत्येतद्दर्शयितुमाह—

मूलम्—णत्थि कोहे व माणे वा, णेव सन्न निवेसए।
अत्थि कोहे व माणे वा एवं सन्नं निवेसए॥
णत्थि माया व लोभे वा, णेव सन्नं निवेसए।
अत्थि माया व लोभे वा, एव सन्नं निवेसए॥
णत्थि पेज्जे व दोसे वा, णेव सन्न निवेसए।
अत्थि पेज्जे व दोसे वा, एव सन्नं निवेसए॥

—श्री सूयगडाङ्ग सूत्र ॥ २।५।२०,२१,२२॥

टीका—स्वपरात्मनोरप्रतीतिलक्षण क्रोध, स चानन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसज्वलनभेदेन चतुर्धाऽऽगमे पठ्यते, तथैतावद्भेद एव मानो गर्व, एतौ द्वावपि 'न स्तो' न विद्यते, तथाहि—क्रोध केपाञ्चिन्मतेन मानांश एव अभिमानग्रहगृहीतस्य तत्कृतावत्यन्तक्रोधोदयदर्शनात्, क्षपकश्रेण्यां च भेदेन क्षपणानभ्युपगमात्, तथा किमयमात्मधर्म आहोस्वित्कर्मण उतान्यस्येति ? तत्रात्मधर्मत्वे सिद्धानामपि क्रोधोदयप्रसङ्ग, अथ कर्मणस्ततस्तदन्यकपायोदयेऽपि तदुदयप्रसङ्गात् मूर्तत्वाच्च कर्मणो घटस्येव तदाकारोपलब्धि स्यात् अन्यधर्मत्वे त्वकिञ्चित्करत्वमतो नास्ति क्रोध इत्येव मानाभावोऽपि वाच्य इत्येवं संज्ञा नो निवेशयेत, यत कपायकर्मोदयवर्ती दष्टोष्ठ कृतभ्रुकुटी-

भङ्गो रक्तवदनो गलत्स्वेदबिन्दुसमाकुल क्रोधाध्मातः समुपलभ्यते, न चासौ मानांश, तत्कार्याकरणात् यथा परनिमित्तोत्थापितत्वाच्चेति, तथा जीवकर्मणोरुभयोरप्ययं धर्म, तद्धर्मत्वे च प्रत्येकविकल्पदोषानुपपत्ति, अनभ्युपगमान्, ससार्यात्मनां कर्मणा सार्द्धं पृथग्भवनाभावात्तदुभयस्य च नरसिंहवद्वर्गान्तरत्वादित्यतोऽस्ति क्रोधो मानश्चेत्येव सज्ञा निवेशयेत् ॥ २० ॥ साम्प्रतं मायालोभयोरस्तित्व दर्शयितुमाह—अत्रापि प्राग्वन्मायालोभयोरभाववादिनं निराकृत्यास्तित्वं प्रतिपादनीयमिति ॥ २१ ॥

साम्प्रतमेषामेव क्रोधादीना समासेनास्तित्वं प्रतिपादयन्नाह—प्रीतिलक्षणं प्रेम—पुत्रकलत्रधनधान्यात्मीयेषु रागस्तद्विपरीतस्त्वात्मीयोपघातकारिणि द्वेष, तावेतौ द्वावपि न विद्येते, तथाहि—केषाञ्चिदभिप्रायो यदुत—मायालोभावेवावयवौ विद्येते, न तत्समुदायरूपो रागोऽवयव्यस्ति, तथा क्रोधमानावेव स्त, न तत्समुदायरूपोऽवयवी द्वेष इति, तथाहि—अवयवेभ्यो यद्यभिन्नोऽवयवी तर्हि तदभेदात्त एव नासौ अथ भिन्न पृथगुपलम्भ स्याद् घटपटवदित्येवमसद्विकल्पमूढतया नो संज्ञा निवेशयेत्, यतोऽवयवावयविनो कथञ्चिद्भेद इत्येवं भेदाभेदाख्यतृतीयपक्षसमाश्रयणात्प्रत्येकपक्षाश्रितदोषानुपपत्तिरिति, एवं चास्ति प्रीतिलक्षणं प्रेमाप्रीतिलक्षणश्च द्वेष इत्येव संज्ञां निवेशयेत् ॥ २२ ॥

साम्प्रतं कषायसद्भावे सिद्धे सति तत्कार्यभूतोऽवश्यंभावी संसारसद्भाव इत्येतत्प्रतिषेधनिषेधद्वारेण प्रतिपादयितुमाह—

मूलम्—णत्थि चाउरते संसारे, णेवं मन्नं निवेसए ।
अत्थि चाउरंते संसारे, एवं सन्नं निवेसए ॥
णत्थि देवो व देवी वा, णेवं सन्नं निवेसए ।
अत्थि देवो व देवी वा एव सन्नं निवेसए ॥

—श्री सूयगडाङ्ग सूत्र ॥ २।५।२३, २४ ॥

टीका—चत्वारोऽन्ता—गतिभेदा नरकतिर्यङ्नरामर-लक्षणा यस्य ससारस्यासौ चतुरन्त ससार एव कान्तारो भयैकहेतुत्वात्, स च चतुर्विधोऽपि न विद्यते, अपितु सर्वेषा ससृतिरूपत्वात्कर्मबन्धात्मकतया च दुःखैकहेतुत्वादेकविध एव, अथवा नारकदेवयोरनुपलभ्यमानत्वात्तिर्यङ्मनुष्ययोरेव सुखदुःखोत्कर्षतया तद्व्यवस्थानाद् द्विविध ससार पर्यायनयाश्रयणात्त्वनेकविधः अतश्चातुर्विध्य न कथचिद् घटत इत्येवं सज्ञा नो निवेशयेद्, अपितु अस्ति चतुरन्त ससार इत्येव सज्ञा निवेशयेत् ।
यत्तूक्तम्—एकविध ससार तन्नोपपद्यते यतोऽध्यक्षेण तिर्यङ्मनुष्ययोर्भेद समुपलभ्यते, न चासावेकविधत्वे ससारस्य घटते, तथा सभवानुमानेन नारकदेवानामप्यस्तित्वाभ्युपगमाद् द्वैविध्यमपि न विद्यते, सभवानुमान तु—सन्ति पुण्यपापयो प्रकृष्टफलभुज, तन्मध्यफलभुजा तिर्यङ्मनुष्याणा दर्शनाद्, अत सम्भाव्यन्ते प्रकृष्टफलभुजो, ज्योतिषा प्रत्यक्षेणैव दर्शनाद्, अथ तद्विमानानामुपलम्भ, एवमपि तदधिष्ठातृभि केश्चिद्भवितव्यमित्यनुमानेन

गम्यन्ते, ग्रहगृहीतवरप्रदानादिना च तदस्तित्वानुमिति, तदस्तित्वे तु प्रकृष्टपुण्यफलभुज इव प्रकृष्टपापफलभुग्भिरपि भाव्यमित्यतोऽस्ति चातुर्विध्यं संसारस्य पर्यायनयाश्रयणे तु यदनेकविधत्वमुच्यते तदयुक्तं, यत सप्तपृथिव्याश्रिता अपि नारका समानजातीयाश्रयणादेकप्रकारा एव, तथा तिर्यञ्चोऽपि पृथिव्यादय स्थावरास्तथा द्वित्रिचतुपञ्चेन्द्रियाश्च द्विषष्टियोनिलक्षप्रमाणा सर्वेऽप्येकविधा एव, तथा मनुष्या अपि कर्मभूमिजाकर्मभूमिजान्तरद्वीपकसमूर्च्छनजात्मकभेदमनादृत्यैकविधत्वेनैवाश्रिता तथा देवा अपि भवनपतिव्यन्तरज्योतिष्कवैमानिकभेदेन भिन्ना एकविधत्वेनैव गृहीता, तदेवं सामान्यविशेषाश्रयणाच्चातुर्विध्य संसारस्य व्यवस्थितं नैकविधत्व, संसारवैचित्र्यदर्शनात्, नाप्यनेकविधत्वं सर्वेषां नारकादीनां स्वजात्यनतिक्रमादिति ॥ २३ ॥ २४ ॥

सर्वभावना सप्रतिपक्षत्वात्संसारसद्भावे सति अवश्य तद्विमुक्तिलक्षणया सिद्ध्यापि भवितव्यमित्यतोऽधुना सप्रतिपक्षां सिद्धि दर्शयितुमाह—

मूलम्—णत्थि सिद्धि असिद्धि वा, णेवं सन्नं निवेसए ।
अत्थि सिद्धि असिद्धि वा, एव सन्नं निवेसए ॥
णत्थि सिद्धि नियं ठाणं, णेवं सन्नं निवेसए ।
अत्थि सिद्धि नियं ठाणं, एवं सन्नं निवेसए ॥

—श्री सूयगडाङ्ग सूत्र २।५।२५,२६ ॥

**टीका**—सिद्धि अशेषकर्मच्युतिलक्षणा तद्विपर्यस्ता चासिद्धिर्नास्तीत्येवं नो संज्ञां निवेशयेद्, अपि त्वसिद्धे—संसारलक्षणायाश्चातुर्विध्येनानन्तरमेव प्रसाधितायाः अविगानेनास्तित्व प्रसिद्धं, तद्विपर्ययेण सिद्धेरप्यस्तित्वमनिवारितमित्यतोऽस्ति सिद्धिरसिद्धिर्वेत्येव संज्ञां निवेशयेदिति स्थितम्, इदमुक्तं भवति—सम्यग्दर्शनज्ञानचारित्रात्मकस्य मोक्षमार्गस्य सद्भावात्कर्मक्षयस्य च पीडोपशमादिनाऽध्यक्षेण दर्शनादत कस्यचिदात्यन्तिककर्महानिसिद्धेरस्ति सिद्धिरिति, तथा चोक्तम्—"दोषावरणयोर्हानिर्निःशेषाऽस्त्यतिशायिनी। क्वचिद्यथा स्वहेतुभ्यो, बहिरन्तर्मलक्षय ॥ १ ॥" इत्यादि, एवं सर्वज्ञसद्भावोऽपि संभवानुमानाद्द्रष्टव्यः, तथाहि—अभ्यस्यमानायाः प्रज्ञाया व्याकरणादि[ना]शास्त्रसंस्कारेणोत्तरोत्तरवृद्ध्या प्रज्ञातिशयो दृष्ट, तत्र कस्यचिदत्यन्तातिशयप्राप्ते सर्वज्ञत्वं स्यादिति संभवानुमान, न चैतदाशंकनीयम्, तद्यथा—ताप्यमानमुदकमत्यन्तोष्णतामियान्नाग्निसाद्भवेत्, तथा "दशहस्तान्तर व्योम्नि यो नामोत्प्लुत्य गच्छति। न योजनमसौ गन्तु शक्तोऽभ्यासशतैरपि ॥ १ ॥" इति, दृष्टान्तदार्ष्टान्तिकयोरसाम्यात्, तथाहि—ताप्यमानं जलं प्रतिक्षणं क्षयं गच्छेन्न प्रज्ञा तु विवर्धते, यदि वा प्लोपे पञ्चत्वेऽव्याहतमग्नित्वं, तथा प्लवनविषयेऽपि पूर्वमर्यादाया अनतिक्रमाद्योजनोत्प्लवनाभाव, तत्परित्यागे चोत्तरोत्तर वृद्ध्या

प्रज्ञाप्रकर्षगमनवद्योजनशतमपि गच्छेदित्यतो दृष्टान्तदार्ष्टान्तिकयोरसाम्यादेतन्नाशंकनीयमिति स्थितम्, प्रज्ञावृद्धेश्च बाधकप्रमाणाभावादस्ति सर्वज्ञत्वप्राप्तिरिति। यदिवा अञ्जनभृतसमद्गकदृष्टान्तेन जीवकुलत्वाज्जगतो हिंसाया दुर्निवारत्वात्सिद्ध्याभाव, तथा चोक्तम्—

"जले जीवा स्थले जीवा, आकाशे जीवमालिनि।
जीवमालाकुले लोके, कथं भिक्षुरहिंसक ? ॥ १ ॥"

इत्यादि, तदेवं सर्वस्यैव हिंसकत्वात्सिद्ध्यभाव इति, तदेतदयुक्तं, तथाहि—सदोपयुक्तस्य पिहिताश्रवद्वारस्य पंचसमितिसमितस्य त्रिगुप्तिगुप्तस्य सर्वथा निरवद्यानुष्ठायिनो द्विचत्वारिंशद्दोषरहितभिक्षाभुज ईर्यासमितस्य कदंचिद्द्रव्यत प्राणिव्यपरोपणेऽपि तत्कृतबन्धाभाव, सर्वथा तस्यानवद्यत्वात, तथा चोक्तम्—"उच्चालियंमि पाए" इत्यादि प्रतीतं, तदेवं कर्मभावत्सिद्ध सद्भावोऽव्याहत, सामग्र्यभावादसिद्धिसद्भावोऽपीति ॥ २५ ॥
साम्प्रत सिद्धानां स्थाननिरूपणायाह—'णत्थि सिद्धी' इत्यादि सिद्धे —अशेपकर्मच्युतिलक्षणाया निजं स्थानं—ईषत्प्राग्भाराख्यं व्यवहारतो, निश्चयस्तु तदुपरि योजनक्रोशषड्भाग, तत्प्रतिपादकप्रमाणाभावात्स नास्तीत्येवं सञ्ज्ञा नो निवेशयेत्, यतो बाधकप्रमाणाभावात् साधकस्य चागमस्य सद्भावात्तत्सत्ता दुर्निवारेति। अपि च—अपगताशेपकल्मषाणां सिद्धानां केनचिद्विशिष्टेन स्थानेन भाव्यम्, तच्चतुर्दशरज्ज्वात्मकस्य लोकस्याग्रभूतं

द्रष्टव्य, न च शक्यते वक्तुमाकाशवत्सर्वव्यापिन सिद्धा इति, यतो लोकालोकव्याप्याकाश, न चालोकेऽपरद्रव्यस्य राभव, तस्याकाशमात्ररूपत्वात् लोकमात्रव्यापित्वमपि नास्ति, विकल्पानुपपत्ते, तथाहि—सिद्धावस्थाया तेषा व्यापित्वमभ्युपगतमुत प्रागपि ?, न तावत्सिद्धावस्थाया, तद्व्यापित्वभवने निमित्ताभावात्, नापि प्रागवस्थाया, तद्भावे सर्वसंसारिणा प्रतिनियतसुखदुखानुभवो न स्यात्, न च शरीराद्बहिरवस्थितमवस्थानमस्ति, तत्सत्तानिबन्धनस्य प्रमाणस्याभावात्, अत सर्वव्यापित्व विचार्यमाणं न कथञ्चिद् घटते, तदभावे च लोकाग्रमेव सिद्धानां स्थानं, तद्गतिश्च 'कर्मविमुक्तस्योर्ध्वं गति' रितिकृत्वा भवति तथा चोक्तम्—

"लाउ एरंडफले अग्गी धूमे य उसु धणुविमुक्के ।
गइ पुव्वपओगेण एव सिद्धाणवि गईओ ॥ १ ॥"

इत्यादि । तदेवमस्ति सिद्धिस्तस्याश्च निज स्थानमित्येव सज्ञा निवेशयेदिति ॥ २६ ॥

साम्प्रतं सिद्धे साधकानां साधूना तत्प्रतिपक्षभूतानामसाधूनां चास्तित्वं प्रतिपादयिषु पूर्वपक्षमाह—

मूलम्—णत्थि साहू असाहू वा, णेवं सन्नं निवेसए ।
अत्थि साहू असाहू वा, एवं सन्नं निवेसए ॥

णत्थि कल्लाण पावे वा, णेवं सन्नं निवेसए।
अत्थि कल्लाण पावे वा, एव सन्नं निवेसए ॥

—श्री सूयगडाङ्ग सूत्र २।५।२७,२८ ॥

टीका—'नास्ति' न विद्यते ज्ञानदर्शनचारित्रक्रियोपेतो मोक्षमार्गंव्यवस्थित साधु, सम्पूर्णस्य रत्नत्रयानुष्ठानस्याभावात्, तदभावाच्च तत्प्रतिपक्षत्वादेतद्व्यवस्थानस्यैकतराभावे द्वितीयस्याप्यभाव इत्येव सज्ञां नो निवेशयेत, अपि तु अस्ति साधु, सिद्धे प्राक्साधितत्वात्, सिद्धिसत्ता च न साधुमन्तरेण, अत साधु सिद्धि तत्प्रतिपक्षभूतस्य चासाधोरिति। यश्च सम्पूर्णरत्नत्रयानुष्ठानाभाव प्रागाशंकित स सिद्धान्ताभिप्रायमबुद्ध्वैव, तथाहि—सम्यग्दृष्टेरुपयुक्तस्य सत्तायमवत श्रुतानुसारेणाऽऽहारादिकं शुद्धबुद्ध्या गृह्णत क्वचिदज्ञानादनेषणीयग्रहणसम्भवेऽपि सततोपयुक्ततया सम्पूर्णमेव रत्नत्रयानुष्ठानमिति, यश्च भक्ष्यमिदमिद चाभक्ष्यं गम्यमिदमिदं चागम्यं प्रासुकमेषणीयमिदमिदं च विपरीतमित्येवं रागद्वेषसम्भवेन समभावरूपस्य सामयिकस्याभाव कैश्चिच्चोद्यते तत्तेषां चोदनमज्ञानविजृम्भणात्, तथाहि—न तेषां सामायिकवतां साधूनां रागद्वेषतया भक्ष्याभक्ष्यादिविवेक. अपितु प्रधानमोक्षाङ्गस्य सच्चारित्रस्य साधनार्थम्, अपि च—उपकारापकारयो समभावतया सामायिक न पुनर्भक्ष्याभक्ष्ययो समप्रवृत्त्येति ॥ २७ ॥ तदेवं मुक्ति-

मार्गप्रवृत्तस्य साधुत्वमितरस्य चासाधुत्व प्रदर्श्याधुना च सामान्येन कल्याणपापवतो सद्भावं प्रतिपेधनिपेधद्वारेणाह—'णत्थि कल्लाण पावे वा' इत्यादि, यथेष्टार्थफलसम्प्राप्ति कल्याणं तन्न विद्यते, सर्वाशुचितया निरात्मकत्वाच्च सर्वपदार्थानां बौद्धाभिप्रायेण, तथा तदभावे कल्याणवा व न कश्चिद्विद्यते, तथाऽऽत्माद्वैतवाद्यभिप्रायेण 'पुरुष एवेद सर्व' मिति कृत्वा पाप पापवान् वा न कश्चिद् विद्यते तदेवमभयोरप्यभाव, तथा चोक्तम्—

"विद्याविनयसम्पन्ने, ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च, पण्डिता समदर्शिन ॥ १ ॥"

इत्येवमेव कल्याणपापकाभावरूपां सज्ञा नो निवेशयेद्, अपि त्वस्ति कल्याणं कल्याणवाश्च विद्यते, तद्विपर्यस्तं पापं तद्वाश्च विद्यते, इत्येव सज्ञां निवेशयेत्, तथाहि—नैकान्तेन कल्याणाभावो यो बौद्धैरभिहित, सर्वपदार्थानामशुचित्वासम्भवात्, सर्वाशुचित्वे च बुद्धस्याप्यशुचित्वप्राप्ते, नापि निरात्मान स्वद्रव्यक्षेत्रकालभावापेक्षया सर्वपदार्थाना विद्यमानत्वात् परद्रव्यादिभिस्तु न विद्यन्ते, सदसदात्मकत्वाद्वस्तुन तदुक्तम्—"स्वपरसत्ताव्युदासोपादानापाद्यं हि वस्तुनो वस्तुत्व" मिति तथाऽऽत्माद्वैतभावाभावात्पापाभावोऽपि नास्ति अद्वैतभावे हि सुखी दु खी सरोगो नीरोग सुरूप कुरूपो दुर्भग सुभगोऽर्थवान् दरिद्रस्तथाऽयमन्तिकोऽय तु दवीयान इत्येवमादिको जगद्वैचित्र्यभावोऽध्यक्षसिद्धो-

ऽपि न स्यात्। यच्च समदर्शित्वमुच्यते ब्राह्मणचाण्डालादिषु तदपि समानपीडोत्पादनतो द्रष्टव्यं न पुन कर्मापादितवैचित्र्यभावोऽपि तेषां ब्राह्मणचाण्डालादीनां नास्तीति, तदेव कथचित्कल्याणमस्ति, तद्विपर्यस्तं तु पापकमिति। न चैकान्तेन कल्याणं कल्याणमेव, यत केवलिनां प्रक्षीणघनघातिकर्मचतुष्टयानां सातासातोदयसद्भावात्तथा नारकाणामपि पंचेन्द्रियत्वविशिष्टज्ञानादिसद्भावान्नैकान्तेन तेऽपि पापवन्त इति तस्मात्कश्चित्कल्याणं कश्चित्पापमिति स्थितम्॥ २८॥

तदेव कल्याणपापयोरनेकान्तरूपत्वं प्रसाध्यैकान्तं दूषयितुमाह—

मूलम्—कल्लाणे पावए वावि, ववहारो ण विज्जइ।
जं वेरं तं न जाणन्ति, समणा बाल पंडिया॥
असेसं अक्खयं वावि, सव्वदुक्खेति वा पुणो।
वज्झा पाणा न वज्झत्ति, इति वायं न नीसरे॥
दीसंति समियायारा, भिक्खुणो साहुजीविणो।
एए मिच्छोवजीवंति, इति दिट्ठिं न धारए॥

—श्री सूयगडाङ्ग सूत्र २।५।२९,३०,३१॥

टीका—कल्य—सुखमारोग्यं शोभनत्वं वा तदणतीति कल्याणं तदस्यास्तीति कल्याणो मत्वर्थीयाच्प्रत्ययान्तोऽर्शआदिभ्योऽजित्यनेन, कल्याणवानिति यावत्। एवं पापकशब्दोऽपि मत्वर्थीयाच्प्रत्ययान्तो द्रष्टव्य। तदेव सर्वथा कल्याणवानेवायं तथा पापवानेवायमित्येवंभूतो

व्यवहारो न विद्यते, तदेकान्तभूतस्यैवाभावात्, तदभावस्य च सर्ववस्तूनामनेकान्ताश्रयेण प्राक्प्रसाधितत्वादिति । एतच्च व्यवहाराभावाश्रयण सर्वत्र प्रागपि योजनीयम्, तद्यथा—सर्वत्र वीर्यमस्ति नास्ति वा सर्वत्रवीर्यमित्येवंभूत एकान्तिको व्यवहारो न विद्यते, तथा नास्ति लोकोऽलोको वा तथा न सन्ति जीवा अजीवा इति चेत्येवभूतो व्यवहारो न विद्यत इति सर्वत्र सम्बन्धनीयम्। तथा वैर—वज्रं तद्वत्कर्म वैर विरोधो वा वैर तद्येन परोपघातादिनैकान्तपक्षसमाश्रयणेन वा भवति तत्तो 'श्रमणा' तीर्थिका वाला इव रागद्वेपकलिता 'पण्डिता' पण्डिताभिमानिन शुष्कतर्कदर्पाध्माता न जानन्ति, परमार्थभूतस्याहिंसालक्षणस्य धर्मस्यानेकान्तपक्षस्य वाऽनाश्रयणादिति । यदिवा यद्वैर तत्ते श्रमणा वाला पण्डिता वा न जानन्तीत्येव वाच न निसृजेदित्युत्तरेण सम्बन्ध, किमिति न निसृजेत्? यतस्तेऽपि किञ्चिज्जानन्त्येव। अपि च तेपा तन्निमित्तकोपोत्पत्तेः, यच्चैवभूतं वचस्तन्न वाच्य, यत उक्तम्—"अप्पत्तिय जेण सिया, आसु कुप्पिज्ज वा परो। सव्वसो त ण भासेज्जा, भास अहियगामिणि॥ ? ॥" इत्यादि ॥ २६ ॥

अपरमपि वाक्सयममधिकृत्याह— 'असेस' मित्यादि, अशेप कृत्स्नं तत्सामान्याभिप्रायेण अक्षत नित्यमित्येवं न ब्रूयात्, प्रत्यक्षं प्रतिसमय चान्यथाऽन्यथाभावदर्शनात् न सर्वथानित्यमेवंभूतस्य स्वस्वभावाक्षय प्रत्यभिज्ञानस्य भूतत्वादुत्पन्नेषु केशनखादि-

ष्वपि प्रदर्शनात, तथा अपिशब्दादेकान्तेन क्षणिकमित्येवमपि वाचं न निसृजेत्, सर्वथा क्षणिकत्वे पूर्वस्य सर्वथा विनष्टत्वादुत्तरस्य निर्हेतुक उत्पादः स्यात्, तथा च सति 'नित्यं सत्त्वमसत्त्वं वाऽहेतोरन्यानपेक्षणा' दिति। तथा सर्वं जगद्दुःखात्मकमित्येवमपि न ब्रूयात सुखात्मकस्यापि सम्यग्दर्शनादिभावेन दर्शनात् तथा चोक्तम्—'तणसंथारनिसण्णोऽवि मुणिवरो भट्ठरागमयमोहो। जं पावइ मुत्तिसुहं कत्तो तं चक्कवट्टीवि? ॥ १॥" इत्यादि तथा वध्याश्चौरपारदारिकादयोऽवध्या वा तत्कर्मानुमतिप्रसङ्गादित्येवंभूतां वाचं स्वानुष्ठानपरायणः साधुः परव्यापारनिरपेक्षो न निसृजेत्, तथाहि सिंहव्याघ्रमार्जारादीन्परसत्त्वव्यापादनपरायणान् दृष्ट्वा माध्यस्थ्यमवलम्बयेत, तथा चोक्तम्—"मैत्रीप्रमोदकारुण्यमाध्यस्थ्यानि सत्त्वगुणाधिकक्लिश्यमानाविनेयेष्विति," (तत्वा० अ०७, सू०६) एवमन्योऽपि वाक्संयमो द्रष्टव्य तद्यथा—अमी गवादयो वाह्या न वाह्या वा तथाऽमी वृक्षादयश्छेद्या न छेद्या वेत्यादिक वचो न वाच्यं साधुनेति ॥ ३०॥ अयमपरो वाक्संयमप्रकारोऽन्तःकरणशुद्धिसमाश्रित प्रदर्श्यते—'दीसन्ती' त्यादि, 'दृश्यन्ते" समुपलभ्यन्ते स्वशास्त्रोक्तेन विधिना निभृत—संयत आत्मा येषां ते निभृतात्मान क्वचित्पाठ 'समियाचार' त्ति सम्यक्—स्वशास्त्रविहितानुष्ठानादविपरीत आचारः—अनुष्ठानं येषां ते सम्यगाचारा, सम्यग्वा—इतो व्यवस्थित आचारो येषां ते समिताचारा, के ते?—भिक्षणशीला भिक्षवो भिक्षामात्रवृत्तय, तथा साधुना विधिना जीवितुं शीलं येषां ते साधुजीविनः, तथा हि—ते न कस्यचिदुपरोधविधानेन जीवन्ति तथा क्षान्ता दान्ता

जितक्रोधा सत्यसंधा दृढव्रता युगान्तरमात्रदृष्टयः। परिमितोदकपायिनो मौनिन सदा तायिनो विविक्तैकान्तध्यानाध्यासिन अकौत्कुच्यास्तानेवंभूतानवधार्यापि 'सरागा अपि वीतरागा इव चेष्टन्ते' इति मत्वैते मिथ्यात्वोपजीविन इत्येवं दृष्टिं न धारयेत्—नैवभूतमध्यवसायं कुर्यान्नाप्येवभूतां वाचं निसृजेत्, यथैते मिथ्योपचारप्रवृत्ता मायाविन इति, छद्मस्थेन ह्यर्वाग्दर्शिनैवंभूतस्य निश्चयस्य कर्तुमशक्यत्वादित्यभिप्राय, ते च स्वयूथ्या वा भवेयुस्तीर्थान्तरीया वा तावुभावपि न वक्तव्यो साधुना यत उक्तम्—"यावत्परगुणपरदोषकीर्तने व्यापृतं मनो भवति। तावद्वरं विशुद्धे ध्याने व्यग्रं मन कर्तुम्॥१॥" इत्यादि॥३१॥

किञ्चान्यत्—

सूत्रम्-दक्खिणाए पडिलंभो अत्थि वा णत्थि वा पुणो।
न वियागरेज्ज मेहावी संतिमग्गं च वूहए॥
इच्चेएहिं ठाणेहिं, जिणदिट्ठेहिं संजए।
धारयन्ते उ अप्पाणं, आमोक्खाए परिव्वएज्जासि॥
त्ति बेमि॥

—श्री सूयगडाङ्ग सूत्र २।५।३२,३३॥

टीका—दानं दक्षिणा तस्या प्रतिलम्भः—प्राप्ति स दानलाभोऽस्मादमुष्माद् वा सकाशादस्ति नास्ति वेत्येवं न व्यागृणीयान्मेधावी—मर्यादाव्यवस्थित। यदि वा स्वयूथ्यस्य तीर्थान्तरीयस्य वा दानं ग्रहणं वा प्रति यो लाभः स एकान्तेनास्ति भवति

नास्ति वेत्येवं न ब्रूयादेकान्तेन, तद्दानग्रहणनिषेधे दोषोत्पत्ति-सम्भवात्, तथाहि तद्दाननिषेधेऽन्तरायसंभवस्तद्वैचित्र्यं च, तद्दानानुमतावधर्माधिकरणोद्भव इत्यतोऽस्ति दानं नास्ति वेत्येवमेका-न्तेन न ब्रूयात्। कथं तर्हि ब्रूयादिति दर्शयति—शान्ति—मोक्षस्तस्य मार्गः—सम्यग्दर्शनज्ञानचारित्रात्मकस्तमुपबृंहयेद् वर्धयेत्, यथा मोक्षमार्गाभिवृद्धिर्भवति तथा ब्रूयादित्यर्थः, एतदुक्तं भवति पृष्टः केनचिद्विधिप्रतिषेधमन्तरेण देयप्रतिग्राहक-विषयं निरवद्यमेव ब्रूयादित्येवमादिकमन्यदपि विविधधर्मदेशनाव-सरे वाच्यं तथा चोक्तम्—सावज्जणवज्जाणं वयणाणं जो न जाणइ विसेसं" इत्यादि साम्प्रतमध्ययनार्थमुपसंजिघृक्षुराह—'इच्चेएहिं', मित्यादि, इत्येतैरेकान्तनिषेधद्वारेणानेकान्तविधायिभि-स्थानैर्वाक्संयमप्रधानैः समस्ताध्ययनोक्तैः रागद्वेषरहितैर्जिनैर्दृष्टैः—उपलब्धैर्न स्वमतिविकल्पोत्थापितैः संयतः—सत्संयमवानात्मा-नं धारयन्—एभिः स्थानैरात्मानं वर्तयन्नामोक्षाय—अशेषकर्म-क्षयाख्यं मोक्षं यावत्परि—समन्तात्संयमानुष्ठाने व्रजेः गच्छे-स्त्वमिति विधेयस्योपदेशः। इति परिसमाप्त्यर्थे, ब्रवीमीति पूर्ववत्। नयाः अभिहिता अभिधास्यमानलक्षणाश्चेति ॥ ३३ ॥

# श्री ठाणांग सूत्र

मूलम्-जदत्थि णं लोगे त सव्वं दुपओआरं तंजहा—
जीवच्चेव अजीवच्चेव । तसे चेव थावरे चेव १,
सजोणियच्चेव अजोणियच्चेव २, साउयच्चेव
अणाउयच्चेव ३, सइंदियच्चेव, अणिंदिएच्चेव ४,
सवेयगा चेव, अवेयगा चेव ५, सरूवि चेव
अरुवि चेव ६, सपोग्गला चेव अपोग्गला चेव ७,
संसारसमावन्नगा चेव असंसारसमावन्नगा चेव ८,
सासया चेव असासया चेव ९ ॥

—श्री स्थानाङ्ग सूत्र स्थान २ उद्देश १ सूत्र ५७ ॥

टीका—अस्य च पूर्वसूत्रेण सहाय सम्बन्ध—पूर्व मुक्तम् 'एक गुणरूक्षा पुद्गला अनन्ता' तत्र किमनेकगुणरूक्षा अपि पुद्गला भवन्ति येन ते एकगुणा रूक्षतया विशिष्यन्त इति ? उच्यते, भवन्त्येव, यतो 'जदत्थी' त्यादि, परम्परसूत्रसम्बन्धस्तु— 'श्रुतं मयाऽऽयुष्मता भगवतैवमाख्यातमेक आत्मे' त्यादि तदे-दमपरमाख्यात 'जदत्थी' त्यादि, संहितादिचर्चः पूर्ववत्, 'यद्' जीवादिकं वस्तु 'अस्ति' विद्यते, णमिति वाक्यालङ्कारे, क्व-चित्पाठो जदत्थि चणं ति, तत्रानुस्वार आगमिकश्चशब्द पुनरर्थ

एवं चास्य प्रयोग —अस्त्यात्मादिवस्तु, पूर्वाऽध्ययनप्ररूपितत्वात्, यच्चास्ति 'लोके' पञ्चास्तिकायात्मके लोक्यते—प्रमीयत इति लोक इति व्युत्पत्त्या लोकालोकरूपे वा तत् 'सर्वं' निरवशेषं द्वयो पदयो —स्थानयो प्रत्ययोर्विभक्तिमवस्तुनाद्विपर्ययज्ञनयोरवतारो यस्य तत् द्विपदावतारमिति, 'दुपडोयारं' ति क्वचित् पठ्यते, तत्र द्वयो प्रत्यवतारो यस्य तत् द्विप्रत्यवंतारमिति, स्वरूपवत् प्रतिपक्षवच्चेत्यर्थ, 'तद्यथे' त्युदाहरणोपन्यासे, जीवच्चेव अजीवच्चेत्ति, जीवाश्चैवाजीवाश्चैव, प्राकृतत्वात् संयुक्तपरत्वेन ह्रस्व, चकारौ समुच्चयार्थौ, एवकारावनवधारणे, तेन च राश्यन्तरापोहमाह, नो जीवाख्यं राश्यन्तरमस्तीति चेत्, नैवम्, सर्वनिषेधकत्वे नोशब्दस्य नोजीवशब्देनाजीव एव प्रतीयते, देशनिषेधकत्वे तु जीवदेश एव प्रतीयते; न च देशो देशिनोऽत्यन्तव्यतिरिक्त इति जीव एवासाविति, 'च्चेय' इति वा एवकारार्थ 'चिय च्चेय एवार्थ' इति वचनात्, ततश्च जीवा एवेति विवक्षितवस्तु अजीवा एवेति च तत्प्रतिपक्ष इति, एवं सर्वत्र, अथवा 'यदस्ति' अस्तीति यत् सन्मात्रं यदित्यर्थ तद् द्विपदावतारं—द्विविधं, जीवाजीवभेदादिति, शेषं तथैव। अथ त्रसेत्यादिकया नवसूत्र्या जीवतत्त्वस्यैव भेदान् सप्रतिपक्षानुपदर्शयति—'तसे चेवे' त्यादि, तत्र त्रसनामकर्मोदयस्त्रस्यन्तीति त्रसा—द्वीन्द्रियादय स्थावरनामकर्मोदयात् तिष्ठंतीत्येवशीला स्थावरा —पृथिव्यादय, सह योन्या-उत्पत्तिस्थानेन सयोनिका —संसारिणस्तद्विपर्यासभूता अयोनिका—सिद्धा, सहायुषा वर्तन्ते इति सायुषस्तदन्येऽनायुष —सिद्धा, एवं सेन्द्रिया —संसारिण, अनिन्द्रिया —सिद्धादय,

सवेदका—स्त्रीवेदाद्युदयवन्त, अवेदका सिद्धादय सहरूपेण—मूर्त्या वर्तन्त इति समासान्ते इन्प्रत्यये सति सरूपिण संस्थानवर्णादिमन्त सशरीरा इत्यर्थ न रूपिणो अरूपिणो—मुक्ता सपुद्गला कर्मादिपुद्गलवन्तो जीवा अपुद्गला—सिद्धा समार भवं समापन्नका—आश्रिता ससारसमापन्नका—ससारिण, तदितरे सिद्धा शाश्वता—सिद्धा जन्ममरणादिरहितत्वात्, अशाश्वता—ससारिणस्तद्युक्तत्वादिति ॥

एव जीवतत्त्वस्य द्विपदावतार निरूप्याजीवतत्त्वस्य तं निरूपयन्नाह—

सूत्रम्- आगासा चेव, नो अगासा चेव ।
धम्मे चेव अधम्मे चेव ॥ (सूत्र ५८)
बंधे चेव, मोक्खे चेव १ पुन्ने चेव पापे चेव ॥२॥
आसवे चेव संवरे चेव ॥३॥
वेयणा चेव निज्जरा चेव ॥ ४ ॥ (सूत्र ५९)
—श्री स्थानाङ्ग सूत्र स्थान २ उद्देश १ ॥

टीका—आकाश व्योम नोआकाश—तदन्यद्धर्मास्तिकायादि, धर्म - धर्मास्तिकायो गत्युपष्टम्भगुण तदन्योऽधर्म—अधर्मास्तिकाय स्थित्युपष्टम्भगुण । सविपक्ष बन्धादितत्त्वसूत्राणि चत्वारि प्राग्वदिति ।

मूलम्—सत्त मूलनया प० त०—नेगमे संगहे ववहारे उज्जुसुते सद्दे समभिरूढे एवंभूते ॥
—श्री स्थानाङ्ग सूत्र स्थान ७, उद्देश ३ सूत्र ५५२ ॥

एवं चास्य प्रयोग —अस्त्यात्मादिवस्तु, पूर्वाध्ययनप्ररूपितत्वात्, यच्चास्ति 'लोके' पञ्चास्तिकायात्मके लोक्यते—प्रमीयत इति लोक इति व्युत्पत्त्या लोकालोकरूपे वा तत् 'सर्वं' निरवशेषं द्वयो पदयो —स्थानयो पत्रयोर्विभाषितं मस्तुनाद्विपर्ययज्ञत्त्रयोरवतारो यस्य तत् द्विपदावतारमिति, 'दुपडोयारं' ति क्वचित् पठ्यते, तत्र द्वयो प्रत्यवतारो यस्य तत् द्विप्रत्यवतारमिति, स्वरूपवत् प्रतिपक्षवच्चेत्यर्थ, 'तद्यथे' त्युदाहरणोपन्यासे, जीवच्चेव अजीवच्चेत्ति, जीवाश्चैवाजीवाश्चैव, प्राकृतत्वात् सयुक्तपरत्वेन ह्रस्व, चकारौ समुच्चयार्थौ, एवकारावप्रधारणे तेन च राश्यन्तरापोहमाह, नो जीवाख्य राश्यन्तरमस्तीति चेत्, नैवम्, सर्वनिषेधकत्वे नोशब्दस्य नोजीवशब्देनाजीव एव प्रतीयते, देशनिषेधकत्वे तु जीवदेश एव प्रतीयते; न च देशो देशिनोऽत्यन्तव्यतिरिक्त इति जीव एवासाविति, 'च्चेय' इति वा एवकारार्थ 'चिय च्चेय एवार्थ' इति वचनात्, ततश्च जीवा एवेति विवक्षितवस्तु अजीवा एवेति च तत्प्रतिपक्ष इति, एवं सर्वत्र, अथवा 'यदस्ति' अस्तीति यत् सन्मात्रं यदित्यर्थ तद् द्विपदावतारं—द्विविधं, जीवाजीवभेदादिति, शेषं तथैव। अथ त्रसेत्यादिकया नवसूत्र्या जीवतत्त्वस्यैव भेदान् सप्रतिपक्षानुपदर्शयति—'तसे चेवे' त्यादि, तत्र त्रसनामकर्मोदयस्त्रस्यन्तीति त्रसा—द्वीन्द्रियादय स्थावरनामकर्मोदयात् तिष्ठतीत्येवशीला स्थावरा—पृथिव्यादय, सह योन्या-उत्पत्तिस्थानेन सयोनिका—ससारिणस्तद्विपर्यासभूता अयोनिका—सिद्धा, सहायुषा वर्तन्ते इति सायुषस्तदन्येऽनायुष—सिद्धा, एव सेन्द्रिया—ससारिण, अनिन्द्रिया—सिद्धादय,

सवेदका —स्त्रीवेदाद्युदयवन्त, अवेदका सिद्धादय, सहरूपेण—मूर्त्या वर्तन्त इति समासान्ते इन्प्रत्यये सति सरूपिण सस्थान-वर्णादिमन्त सशरीरा इत्यर्थ न रूपिणो अरूपिणो—मुक्ता सपुद्गला कर्मादिपुद्गलवन्तो जीवा अपुद्गला —सिद्धा संसारं भवं समापन्नका —आश्रिता संसारसमापन्नका —संसारिण, तदितरे सिद्धा शाश्वता —सिद्धा जन्ममरणादिरहितत्वात्, अशाश्वता—संसारिणस्तद्युक्तत्वादिति ॥

एवं जीवतत्त्वस्य द्विपदावतार निरूप्याजीवतत्त्वस्य तं निरूपयन्नाह—

सूत्रम्- आगासा चेव, नो अगासा चेव।
धम्मे चेव अधम्मे चेव ॥ (सूत्र ५८)
बधे चेव, मोक्खे चेव १ पुन्ने चेव पापे चेव ॥२॥
आसवे चेव संवरे चेव ॥ ३ ॥
वेयणा चेव निज्जरा चेव ॥ ४ ॥ (सूत्र ५६)

—श्री स्थानाङ्ग सूत्र स्थान २ उद्देश १ ॥

टीका—आकाश व्योम नोआकाश—तदन्यद्धर्मास्तिकायादि, धर्म - धर्मास्तिकायो गत्युपष्टम्भगुण तदन्योऽधर्म—अधर्मास्तिकाय स्थित्युपष्टम्भगुण। सविपक्षबन्धादितत्त्वसूत्राणि चत्वारि प्राग्वदिति।

मूलम्—सत्त मूलनया प० त०—नेगमे संगहे ववहारे उज्जुसुते सद्दे समभिरूढे एवंभूते ॥

—श्री स्थानाग सूत्र स्थान ७, उद्देश ३, सूत्र ५५२ ॥

टीका—'सत्त मूले'त्यादि, मूलभूता नया मूलनया, ते च सप्त, उत्तरनया हि सप्तशतानि, यदाह—"एक्केक्को य सयवेहो सत्तनयसया हवति एवं तु। अन्नोऽवि य आएसो पंचेव सया नयाण तु ॥१॥" [एकैक शतविध. एवं सप्तनयशतानि भवन्ति अन्योऽपि चादेशो नयानां पचैव शतानि ॥१॥] तथा—'जावइया वयणपहा तावइया चेव हुति नयवाया। जावइया नयवाया तावइया चेव परसमय ॥२॥" त्ति, [यावन्तो वचनपन्थान तावन्तश्चैव भवन्ति नयवादा. यावन्तो नयवादास्तावन्तश्चैव परसमया इति ॥ १ ॥] तत्रानन्तधर्माध्यासिते वस्तुन्येकधर्मसमर्थनप्रवणो बोधविशेषो नय इति, तत्र 'णेगमे' त्ति नैकैर्मानैर्महासत्तासामान्य-विशेषविशेषज्ञानैर्मिमीते मिनोति वा नैकम., आह च—"णेगाइं माणाइं सामन्नोभयविसेसनाणाइं। जं तेहिं मिणइ तो णेगमो णयो णेगमाणोत्ति ॥ १ ॥" [नैकानि मानानि सामान्योभय-विशेषज्ञानानि यत्तैर्मिनोति ततो नैगमो नयो नैकमान इति ॥१॥] इति निगमेषु वा—अर्थबोधेषु कुशलो भवो वा नैगम, अथवा नैके गमा.—पन्थानो यस्य स नैकगमः, आह च—'लोगत्थ-निबोहा वा निगमा तेसु कुसलो भवो वाऽयं। अहवा ज णेगगमो णेगपहा णेगमो तेणं ॥ १ ॥" इति ॥ [लोकार्थनिबोधा वा निग-मास्तेषु कुशलो भवो वाऽयं। अथवा यत् नैकगमोऽनेकपथो नैगमस्तेन ॥ १ ॥] तत्रायं सर्वत्र सदित्येवमनुगताकारावबोधहेतु-भूता महासत्तामिच्छति अनुवृत्तव्यावृत्तावबोधहेतुभूतं च सामान्य-

विशेषं द्रव्यत्वादि व्यावृत्तावबोधहेतुभूतं च नित्यद्रव्यवृत्तिमन्त्यं विशेषमिति, आह—इत्थं तर्ह्यं न नैगम सम्यग्दृष्टिरेवास्तु सा-मान्यविशेषाभ्युपगमपरत्वात् साधुवदिति, नैतदेवं, सामान्य-विशेषवस्तूनामत्यन्तभेदाभ्युपगमपरत्वात्तस्येति, आह च भाष्य-कार —"ज सामन्नविसेसे परोप्पर वत्थुओ य सो भिन्ने। मन्नइ अच्चंतमओ मिच्छादिट्ठी कणादोव्व ॥ १ ॥ दोहिवि नएहिं नीयं सत्थमुलूएण तहवि मिच्छत्त। जं सविसयपहाणत्तणेण अन्नोन्ननिरवेक्खा ॥ २ ॥" इति [यत्परस्पर वस्तुनश्च सामान्य-विशेषौ भिन्नो अत्यन्त मनुतेऽतो मिथ्यादृष्टि कणाद इव ॥ १ ॥ उलूकेन शास्त्रं द्वाभ्यां नयाभ्यां नीतमपि मिथ्यात्व यत्स्वविषय-प्रधानत्वेनान्योऽन्यनिरपेक्षौ (अङ्गीकृतौ) ॥२॥] इति १, तथा संग्रहण भेदाना संगृह्णाति वा भेदान् सगृह्यन्ते वा भेदा येन स सग्रह, उक्तञ्च — 'सगहण संगिण्हइ सगिज्झने व तेण ज भेया। तो सगहोत्ति"[सग्रहण सगृह्णाति संगृह्यंते वा तेन यस्माद्भेदास्तत सग्रह ॥] एतदुक्त भवति—सामान्य-प्रतिपादनपर. खल्वयं सदित्युक्ते सामान्यमेव प्रतिपद्यते न विशेष, तथा च मन्यते—विशेषा. सामान्यतोऽर्थान्तरभूता. स्युरनर्थान्तरभूता वा ?, यद्यर्थान्तरभूता न सन्ति ते, सामान्यादर्था-न्तरत्वात् खपुष्पवत्, अथानर्थान्तरभूता सामान्यमात्र ते, तदव्यतिरिक्तत्वात्, तत्स्वरूपवदिति, आह च—"सदिति भणियमि जम्हा सव्वत्थाणुप्पवत्तए बुद्धी। तो सव्वं तम्मत्त नत्थि तदत्थंतरं किंचि ॥ १ ॥ कुम्भो भावाऽणन्नो जइ तो भावो अहऽन्नहाऽभावो। एवं पडादओऽविहु भावाऽनन्नत्ति तम्मत्त ॥ २ ॥" इति, [सदिति भणिते यस्मात्सर्वत्रानुप्रवर्तते बुद्धि. तत सर्वं तन्मात्र नास्ति

तदर्थान्तरं किंचित् ॥ १ ॥ कुम्भो भावादनन्यो यदि ततो भावो-ऽथान्यथाऽभाव· एवं पटादयोऽपि भावादनन्या इति तन्मात्रं (सर्वं)। २॥] इति २. तथा व्यवहरणं व्यवहरतीति वा व्यवह्रियते वा—अपलप्यते सामान्यमनेन विशेषान् वाऽऽश्रित्य व्यवहारपरो व्यवहार आह च—'ववहरण ववहरए स तेण ववहीरए व सामन्नं। ववहारपरो य जओ विसेसओ तेण ववहारो ॥ १ ॥" इति, [व्यवहरण व्यवहरति व्यपहरति वा सामान्यं व्यवहारपरो यतश्च विशेषतस्तेन व्यवहार ॥ १ ॥] अय हि विशेषप्रतिपादन-पर सदित्युक्ते विशेषानेव घटादीन् प्रतिपद्यते, तेषामेव व्यवहार-हेतुत्वात्, न तदतिरिक्त सामान्य, तस्य व्यवहारापेतत्वात्, तथा च—सामान्य विशेषेभ्यो भिन्नमभिन्न वा स्यात्?, यदि भिन्न विशेषव्यतिरेकेणोपलभ्येत, न चोपलभ्यते, अथाभिन्न विशेषमात्रं ततव्यतिरिक्त वात्तत्स्वरूपवदिति आह च—'उवलंभव्ववहारा-भावाओ त(नि)व्विसेसभावाओ। तं नत्थि खपुप्फमिव सन्ति विसेसा सयच्चक्खं ॥ १ ॥" इति, [उपलम्भव्यवहाराभावात्तद्वि-(न्निर्वि)शेषभावात् तन्नास्ति खपुष्पमिव विशेषा· सन्ति स्वप्रत्यक्षं ॥ १ ॥] तथा लोकसंव्यवहारपरो व्यवहार, तथाहि—असौ पञ्चवर्णोऽपि। भ्रमरादिवस्तुनि बहुतरत्वात् कृष्णत्वमेव मन्यते, आह च—"बहुतरओत्तिय तं चिय गमेइ सतेवि सेसए मुयइ। संववहारपरतया ववहारो लोगमिच्छन्तो ॥१॥" [संव्यवहार-परतया लोकमिच्छन् व्यवहारो बहुतरत्वादेव तं गमयति सतोऽपि

शेषकान्मुञ्चत्येव ॥ १ ॥] इति ३, तथा ऋजु—वक्रविपर्ययादभि-मुखं श्रुत-ज्ञान यस्यासौ ऋजुश्रुत, ऋजु वा—वर्त्तमानमतीतानागत-वक्रपरित्यागाद्वस्तु सूत्रयति-गमयतीति ऋजुसूत्र, उक्तं च-"उज्जुं रिउ सुय नाणमुज्जुसुयमस्स सोऽयमुज्जुसुओ। सुत्तायइ वा जमुज्जुं वत्थुं तेणुज्जुपुत्तोत्ति ॥ १ ॥" [ऋजु—अवक्र श्रुतं—ज्ञान ऋजुश्रुतमस्य सोऽयमृजुश्रुत सूत्रयति वा यदृजु वस्तु तेन ऋजुसूत्र इति ॥ १ ॥] अय हि वर्त्तमान निजक लिंगवचन-नामादिभिन्नमप्येक वस्तु प्रतिपद्यते, शेषमवस्त्विति, तथाहि—अतीतमेष्यद्वा न भावो, विनष्टानुत्पन्नत्वाददृश्यत्वात्खपुष्पवत्, तथा परकीयमप्यवस्तु निष्फलत्वात् खकुसुमवत्, तस्माद्वर्त्तमानं स्व वस्तु, तच्च न लिङ्गादिभिन्नमपि स्वरूपमुज्झति, लिङ्गभिन्न तटस्तटी तटमिति वचनभिन्नमापो जलं नामादिभिन्न नामस्थापना-द्रव्यभावभिन्न, आह च—"तम्हा निजग संपयकालीयं लिंगवयण-भिन्नपि। नामादिभेयविहिय पडिवज्जइ वत्थुमुज्जुसुय ॥ १ ॥" त्ति [तस्मान्निजक साम्प्रतकालीन लिंगवचनभिन्नमपि नामा-दिभेदवदपि प्रतिपद्यते ऋजुसूत्रो वस्तु ॥ १ ॥] इति ४, तथा शपन शपति वा असौ शप्यते वा तेन वस्त्विति शब्दस्तस्यार्थपरिग्रहा-दभेदोपचारान्नयोऽपि शब्द एव, यथा कृतकत्वादिलक्षणहेत्वर्थ-प्रतिपादकं पद हेतुरेवोच्यत इति, आह च—"सवणं सवइ स तेण व सप्पए वत्थु जं तओ सद्दो। तस्स-ऽत्थपरिगहओ नओऽवि सद्दोत्ति हेउव्व ॥ १ ॥" इति, [शपनं

शप्यते स तेन वा शप्यते वस्तु यत्तत शब्दः । तस्यार्थपरिग्रहात् नयोऽपि शब्द इति हेतुरिव हेत्वर्थप्रतिपादक ॥ १ ॥] अयं च नामस्थापनाद्रव्यकुम्भा न सन्त्येवेति मन्यते, तत्कार्याकरणात् खपुष्पवत्, न च भिन्नलिंगवचनमेकं, लिंग-वचनभेदादेव, स्त्रीपुरुषवत् कटा वृक्ष इत्यादिवत्, अतो घट कुट कुम्भ इति स्वपर्यायध्वनिवाच्यमेकमेवेति, आह च—"तं चिय रिउसुत्तमयं पच्चुपन्नं विसेसियतरं सो। इच्छइ भावघडं चिय जं न उ नामादओ तिन्नि ॥ १ ॥" [तदेव ऋजुसूत्रमतं प्रत्युत्पन्नं विशेषिततर स इच्छति भावघटमेव (मनुते) नैव नामादींस्त्रीन् यत ॥१॥ ] इति ५, तथा नानार्थेषु-नानासंज्ञासम-भिरोहणात् समभिरूढ, उक्तं च—"जं जं सन्नं भासइ तं तं चिय समभिरोहए जम्हा। सन्नतरत्थविमुहो तओ क(न)ओ समभिरूढोत्ति ॥ १ ॥" [यां या संज्ञा भाषते तां तां समभिरोह-त्येव यस्मात् सज्ञान्तरार्थविमुखस्ततो नय समभिरूढ इति ॥ १ ॥] अय हि मन्यते—घटकुटादय शब्दा भिन्नप्रवृत्ति-निमित्तत्वाद्भिन्नार्थगोचरा, घटपटादिशब्दवत्, तथा, च घटनात् घटो विशिष्टचेष्टावानर्थो घट इति, तथा 'कुट कौटिल्ये कुटनात् कुट, कौटिल्ययोग्यात् कुट इति, घटोऽन्य कुटोऽप्यन्य एवेति ६, तथा यथा शब्दार्थ एवं पदार्थो भूत सन्नित्यर्थोऽन्यथा-भूतोऽसन्निति प्रतिपत्तिपर एवंभूतो नय, आह च—' एव जहसद्दत्थो सतो भूओ। तयऽन्नहाऽभूओ। तेणेवंभूयनओ सद्दत्थपरो

विसेसेण ॥ १ ॥" इति, [एव यथाशब्दार्थ स्तथा भूत सन्नन्यथा-ऽभूत तत (असन्) तेनैवभूतनय विशेषेण शब्दार्थपर ॥१॥] अय हि योषिन्मस्तकव्यवस्थित चेष्टावन्तमेवार्थ घटशब्दवाच्य मन्यते, न स्थानभरणादिक्रियान्तरापन्नमिति, भवन्ति चात्र श्लोका—"शुद्ध द्रव्य समाश्रित्य, संग्रहस्तद-शुद्धित । नैगमव्यवहारौ स्त, शेषा पर्यायमाश्रिता ॥ १ ॥ अन्यदेव हि सामान्यमभिन्नज्ञानकारणम् । विशेषोऽप्यन्यमेवेति, मन्यते नैगमो नय ॥ २ ॥ सद्रूपतानतिक्रान्तस्वस्वभावमिद जगत् । सत्तारूपतया सर्वं सगृह्णन् सग्रहो मत ॥ ३ ॥ व्यवहार-स्तु तामेव, प्रतिवस्तु व्यवस्थिताम् । तथैव दृश्यमानत्वात्, व्यवहार-यति देहिन. ॥ ४ ॥ तत्रर्जुसूत्रनीति स्यात्, शुद्धपर्यायसंस्थिता । नश्वरस्यैव भावस्य, भावात् स्थितिवियोगत ॥ ५ ॥ अतीताना-गताकारकालसस्पर्शवर्जितम् । वर्त्तमानतया सर्वमृजुसूत्रेण सूत्र्यते ॥ ६ ॥ विरोधिलिङ्गसख्यादिभेदाद्भि न्नस्वभावताम् । तस्यैव मन्य-मानोऽयं, शब्द प्रत्यवतिष्ठते ॥ ७ ॥ तथाविधस्य तस्यापि, वस्तुन. क्षणवृत्तिन ब्रूते समभिरूढस्तु, सज्ञाभेदेन भिन्नताम् ॥ ८ ॥ एकस्यापि ध्वनेर्वाच्य, सदा तन्नोपपद्यते । क्रियाभेदेन भिन्नत्वादेव-भूतोऽभिमन्यते ॥ ९ ॥"

# श्री भगवती सूत्र

मूलम्–रायगिहे नगरे समोसरणं, परिसा निग्गया जाव एवं वयासी––जीवे णं भन्ते ! सयंकडं दुक्खं वेदेइ ?, गोयम ! अत्थेगइय वेएइ अत्थेगइयं नो वेएइ, से केणट्ठेण भंते ! एवं वुच्चइ––अत्थेगइयं वेदेइ अत्थेगइयं नो वेएइ ?, गोयमा ! उदिन्नं वेएइ अनुदिन्न नो वेएइ, से तेणट्ठेणं एवं वुच्चइ–अत्थेगइय वेएइ अत्थेगतियं नो वेएइ, एवं चउव्वीसदंडएणं जाव वेमाणिए ॥ जीवा णं भंते ! सयकडं दुक्खं वेएन्ति ?, गोयमा ! अत्थेगइयं वेयंति अत्थेगइयं णो वेयंति, से केणट्ठेणं?, गोयमा ! उदिन्नं वेयन्ति नो अणुदिन्नं वेयन्ति, से तेणट्ठेणं, एवं जाव वेमाणिया ॥ जीवे णं भंते ! सयंकडं आउयं वेएइ ? गोयमा ! अत्थेगइयं वेएइ अत्थेगइयं नो वेएइ जहा दुक्खेणं दो दंडगा तहा आउएणवि दो दंडगा एगत्तपुहुत्तिया, एगत्तेणं जाव वेमाणि-या पुहुत्तेणवि तहेव ॥

—श्री भगवती सूत्र शतक १, उद्देश २, सूत्र २० ॥

टीका---'रायगिहे' इत्यादि पूर्ववत्, 'जीवे ण' मित्यादि-तत्र 'सयकडं दुक्ख'ति यत्परकृतं तन्न वेदयतीति प्रतीतमेवात स्वयकृतमिति पृच्छति स्म 'दुक्खं'ति सासारिक सुखमपि वस्तुतो दु खमिति दु खहेतुत्वाद् 'दु ख' कर्म वेदयतीति. काकुपाठान् प्रश्न, निर्वचनं तु यदुदीर्णं तद्वेदयति, अनुदीर्णस्य हि कर्मणो वेदनमेव नास्ति तस्मादुदीर्णं वेदयति, नानुदीर्णं, न च बन्धा-नन्तरमेवोदेति अतोऽवश्यं वेद्यमप्येक न वेदयति इत्येवं व्यप-दिश्यते, अवश्य वेद्यमेव च कर्म "कडाण कम्माण ण मोक्खो अत्थि" इति वचनादिति। एवं 'जाव वेमाणिए' इत्यनेन चतु-र्विंशतिदण्डक सूचित, स चैवम्---'नेरइए णं भन्ते! सयंकड' मित्यादि। एवमेकत्वेन दण्डक, तथा बहुत्वेनान्य, स चैवम्— 'जीवा णं भत्ते! सयकड दुक्खं वेदती'त्यादि तथा 'नेरइयाणं भत्ते! सयकडं दुक्ख'मित्यादि, नन्वेकार्थे योऽर्थो बहुत्वेऽपि स एवेति किं बहुत्वप्रश्नेन? इति, अत्रोच्यते, क्वचिद्वस्तुनि एकत्वबहुत्वयोरर्थविशेषो दृष्टो यथा सम्यक्त्वादेः एक जीवमा-श्रित्य षट्षष्टिसागरोपमाणि साधिकानि स्थितिकाल उक्तो नाना-जीवानाश्रित्य पुन सर्वाद्धा इति, एवमत्रापि सभवेदिति शङ्कायां बहुत्वप्रश्नो न दुष्ट अव्युत्पन्नमतिशिष्यव्युत्पादनार्थत्वाद्वेति॥ अथायुःप्रधानत्वान्नारकादिव्यपदेशस्यायुराश्रित्य दण्डकद्वयम्— एतस्य चेयं वृद्धोक्तभावना—यदा सप्तमक्षितावायुर्बद्धं पुनश्च

कालान्तरे परिणामविशेषात्तृतीयधरणीप्रायोग्यं निर्वर्त्तितं वासुदेवेनेव तत्तादृशमङ्गीकृत्योच्यते—पूर्वबद्ध कश्चिन्न वेदयति, अनुदीर्णत्वात्तस्य, यदा पुनर्यत्रैव बद्ध तत्रैवोत्पद्यते तदा वेदयती-त्युच्यते, तथैव तस्योदिततत्वादिति ॥

मूलम्–से नूणं भंते ! अत्थित्तं अत्थित्ते परिणमइ नत्थित्तं नत्थित्ते परिणमइ ?, हंता गोयमा ! जाव परिणमइ ॥ जण्णं भंते ! अत्थित्त अत्थित्ते परिणमइ नत्थित्तं नत्थित्ते परिणमइ तं किं पयोगसा वीससा ?, गोयमा ! पयोगसावि तं, वीससावि तं । जहा ते भंते ! अत्थित्त अत्थित्ते परिणमइ तहा ते नत्थित्तं नत्थित्ते परिणमइ ? जहा ते नत्थित्तं नत्थित्ते परिणमइ, तहा ते अत्थितं अत्थित्ते परिणमइ ?, हंता गोयमा ! जहा मे अत्थितं अत्थित्ते परिणमइ तहा मे नत्थित्तं नत्थित्ते परिणमइ, जहा मे नत्थित्तं नत्थित्ते परिणमइ तहा मे अत्थित्त अत्थित्ते परिणमइ ॥ से णूणं भंते ! अत्थितं अत्थिते गमणिज्जं ?, जहा परिणमइ दो आलावगा तहा ते इह गमणिज्जेणवि दो आलावगा भाणियव्वा जाव जहा मे अत्थितं अत्थिते गमणिज्जं ॥

—व्याख्या प्र० शत० १, उ० ३ सूत्र ३२ ॥

**टीका**—'से गूणमि'त्यादि 'अत्थित्तं अत्थित्ते परिणमइ' त्ति, अस्तित्व——अगुल्यादे अङ्गुल्यादिभावेन सत्त्वम्, उक्तञ्च—"सर्वमस्ति स्वरूपेण, पररूपेण नास्ति च। अन्यथा सर्वभावानामेकत्वं सम्प्रसज्यते ॥ १ ॥" तच्चेह ऋजुत्वादिपर्याय-रूपमवसेयम्, अङ्गुल्यादिद्रव्यास्तित्वस्य कथञ्चिदृजुत्वादिपर्या-याव्यतिरिक्तत्वात् अस्तित्वे—अङ्गुल्यादेरेवांगुल्यादिभावेन-सत्त्वे वक्रत्वादिपर्याय इत्यर्थ 'परिणमति' तथा भवति, इदमुक्तं भवति—द्रव्यस्य प्रकारान्तरेण सत्ता प्रकारान्तरसत्तायां वर्त्तते यथा मृद्द्रव्यस्य पिण्डप्रकारेण सत्ता घटप्रकारसत्तायामिति। 'नत्थित्त नत्थित्ते परिणमइ'त्ति नास्तित्वं—अगुल्यादेरंगुष्ठादि-भावेनासत्त्व तच्चांगुष्ठादिभाव एव, ततश्चागुल्यादेर्नास्तित्वमगुष्ठा-द्यस्तित्वरूपमगुल्यादेर्नास्तित्वे अंगुष्ठादे पर्यायान्तरेणास्तित्वरूपे परिणमति, यथा मृदो नास्तित्वं तन्त्वादिरूप मृन्नास्तित्वरूपे पटे इति, अथवाऽस्तित्वमिति—धर्मधर्मिणोरभेदात् सद्वस्तु अस्तित्वे—सत्त्वे परिणमति, तत्सदेव भवति, नात्यन्तं विनाशि स्याद् विना-शस्य पर्यायान्तरगमनमात्ररूपत्वात्, दीपादिविनाशस्यापि तमि-स्रादिरूपतया परिणामात् तथा 'नास्तित्वं' अत्यन्ताभावरूपं यत् खरविषाणादि तत् 'नास्तित्वे' अत्यन्ताभाव एव वर्त्तते, नात्यन्त-मसत सत्वमस्ति, खरविषाणस्येवेति, उक्त च—"नासतो जायते भावो, नाभावो जायते सत।" अथवाऽस्तित्वमिति

धर्मभेदात् सद् 'अस्तित्वे' सत्त्वे वर्त्तते, यथा पट पटत्व एव, नास्तित्वं चासत् 'नास्तित्वे वर्त्तते, यथा अपटोऽपटत्व एवेति ॥ अथ परिणामहेतुदर्शनायाह—'ज ण'मित्यादि अत्थित्तं अत्थित्ते परिणमइ' त्ति पर्याय पर्यायान्तरतां यातीत्यर्थ 'नत्थित्तं नत्थित्ते परिणमइ' त्ति वस्त्वन्तरस्य पर्यायस्तत्पर्यायान्तरतां यातीत्यर्थ, 'पओगस' त्ति सकारस्यागमिकत्वात् 'प्रयोगेण' जीवव्यापारेण 'वीसस' त्ति यद्यपि लोके विश्रसाशब्दो जरापर्यायतया रूढस्तथाऽपीह स्वभावार्थो दृश्य, इह प्राकृतत्वाद् 'वीससाए'त्ति वाच्ये 'वीससा' इत्युक्तमिति, अत्रोत्तरम्—'पयोगसावि तं'ति, यथा शुभ्राभ्रमशुभ्राभ्रतया, नास्तित्वस्यापि नास्तित्वपरिणामे प्रयोगविश्रसयोरेतान्येवोदाहरणानि, वस्त्वन्तरापेक्षया मृत्पिण्डादेरस्तित्वस्य नास्तित्वात्, सत्सदेव स्यादिति व्याख्यानान्तरेऽप्येतान्येवोदाहरणानि पूर्वोत्तरावस्थयो सद्रूपत्वादिति, यदपि—'अभावोऽभाव एव स्याद्' इति व्याख्यात तत्रापि प्रयोगेणापि तथा विस्रसयाऽपि अभावोऽभाव एव स्यान् न प्रयोगादे साफल्यमिति व्याख्येयमिति ॥ अथोक्तहेत्वोरुभयत्र समता भगवदभिमततां च दर्शयन्नाह—'जहा ते' इत्यादि, 'यथा' प्रयोगविश्रसाभ्यामित्यर्थ. 'ते' इति तव मतेन अथवा सामान्येनास्तित्वपरिणाम प्रयोगविस्रसाजन्य उक्त सामान्यश्च विधि क्वचिदतिशयवति वस्तुन्यन्यथाऽपि स्याद् अतिशयवांश्च भगवानिति तमाश्रित्य परिणामान्यथात्वमाशंकमान आह—'जहा ते' इत्यादि 'ते' इति तव

सम्बन्धि अस्तित्व, शेष तथैवेति ॥ अथोक्तस्वरूपस्यैवास्य सत्यत्वेन प्रज्ञापनीयतां दर्शयितुमाह—'से णूण'मित्यादि, अस्तित्वमस्तित्वे गमनीय सद्वस्तु सत्यत्वेनैव प्रज्ञापनीयमित्यर्थ, 'दो आलावग' त्ति' 'से णूणं भते ! अत्थित्त अत्थित्ते गमणिज्ज'मित्यादि 'पओगसा वि तं वीससावि त' इत्येतदन्त एक, परिणामभेदाभिधानात्, 'जहा ते भंते ! अत्थित्तं अत्थित्ते गमणिज्ज'मित्यादि 'तहा मे अत्थित्त अत्थित्ते गमणिज्ज'मित्येतदन्तस्तु द्वितीयोऽस्तित्वनास्तित्वपरिणामयो समताऽभिधायीति ॥

मूलम्- जीवे णं भन्ते गब्भं वक्कममाणे किं सइंदिए वक्कमइ अणिंदिए वक्कमइ ? गोयमा ! सिय सइंदिए वक्कमइ, सिय अणिंदिए वक्कमइ, से केणट्ठे णं० ?, गोयमा ! दव्विंदियाइं पडुच्च अणिंदिए वक्कमइ, भाविंदियाइं पडुच्च सइंदिए वक्कमइ, से तेणट्ठे णं० । जीवे ण भन्ते ! गब्भं वक्कममाणे किं ससरीरी वक्कमइ असरीरी वक्कमइ ? गोयमा ! सिय ससरीरी व० सिय असरीरी वक्कमइ, से केणट्ठे ण ? गोयमा ! ओरालियवेउव्वियआहारयाइं पडुच्च असरीरी व० तेयाकम्मा० प० सस० वक्क० से तेणट्ठे णं गोयमा !० ।

—व्याख्या प्रज्ञप्ति प्रथम शतक, उद्देश्य ७, सूत्र ६१ ॥

टीका—'गब्भ वक्कममाणे' त्ति गर्भं व्युत्क्रामन् गर्भे उत्पद्यमान इत्यर्थ 'दव्विंदियाइ' त्ति निर्वृत्त्युपकरणलक्षणानि, तानि हीन्द्रियपर्याप्तौ सत्या भविष्यन्तीत्यनिन्द्रिय उत्पद्यते, 'भाविंदियाइ' त लब्ध्युपयोगलक्षणानि, तानि च ससारिण' सर्वावस्थ भावीनीति। 'ससरीरि'त्ति सह शरीरेणेति सशरीरी इन्समासान्तभावात्, 'असरीरि'त्ति शरीरवान् शरीरी, तन्निषेधादशरीरी 'वक्कमइ' त्ति, व्युत्क्रामति—उत्पद्यत इत्यर्थ ।

मूलम्—पुरिसे णं भते ! कच्छंसि वा १ दहसिवा २ उदगंसि वा ३ दवियसि वा ४ वलयसि वा ५ नूमंसि वा ६ गहणंसि वा ७ गहणविदुग्गसि वा ८ पव्वयंसि वा ९ पव्वयविदुग्गसि वा १० वणंसि वा ११ वण-विदुग्गंसि वा १२ मियवित्तीए मियसंकप्पे मिय-पणिहाणे मियवहाए गता एए मिएत्तिकाउं अन्नयरस्स मियस्स वहाए कूडपासं उद्दाइ, ततो णं भंते! से पुरिसे कतिकिरिए पणत्ते ?, गोयमा ! जाव च णं से पुरिसे कच्छंसि वा १२ जाव कूडपासं उद्दाइ ताव च णं से पुरिसे सिय तिकि० सिय चउ० सिय पच०। से केणट्ठेणं सिय ति० सिय च० सिय प०?, गोयमा ! जे भविए उद्दवणयाए णो बंधणयाए णो मारणयाए ताव च णं से पुरिसे काइयाए अहि-गरणियाए पाउसियाए तिहिं किरियाहिं पुट्ठे, जे भविए उद्दवणयाएवि बंधणयाएवि णो मार-

णयाए ताव च णं से पुरिसे काइयए अहिगरणि-
याए पाउसियाए परिग्रावणियाए चउहिं किरि-
याहिं पुट्टे, जे भविए उद्दवणयाएवि बंधणयाए
वि मारणयाए वि ताव च ण से पुरिसे काइयाए
अहिगरणियाए पाउसियाए जाव पंचहिं पुटठे, से
तेणटठेणं जाव पंचकिरिए, (सू० ६५) पुरिसे णं
भंते! कच्छसि वा जाव वणविदुग्गसि वा तण इ
ऊसवियं २ अगणिकाय निस्सरइ ताव च णं से
भंते! से पुरिसे कति किरिए ?, गोयमा! सिय
ति किरिए, सिय चउ कि० सिय पंच०, से
केणटठेणं ? गोयमा! जे भविए उस्सवणयाए
तिहिं, उस्सवणयाए विनिस्सिरणयाएवि नो
दहणयाए चउहिं, जे भविए उस्सवणयाए वि
निस्सिरणयाए वि दहणयाए वि तावं च ण से
पुरिसे काइयाए जाव पंचहिं किरियाहिं पुटठे, से
तेण० गोयमा ! ० ॥ ६६ ।

पुरिसेणं भंते, कच्छंसि वा जाव वणविदुग्गंसि
वा मियवित्तीए मिएसंकप्पे मियपणिहाणे
मियवहाय गता एए मिएत्तिकाउं अन्नयरस्स
मियस्स वहाय उसुं निसिरइ, तता णं भंते! से

पुरिसे कइ किरिए ?, गोयमा ! सिय ति किरिए, सिय चउ किरिए सिय पंच किरिए, से केण-ट्ठेणं ?, गोयमा ! जे भविए निस्सिरणयाए नो विद्धंसणयाए वि नो मारणयाए तिहिं, जे भविए निस्सिरणयाए वि विद्धंसणयाए वि नो मारणयाए चउहिं, जे भविए निस्सिरणयाए वि विद्धंसणयाए वि मारणयाए वि तावं च णं से पुरिसे जाव पंचहिं किरियाहिं पुट्ठे, से तेणं॰गोयमा ! सिय ति किरिए सिय चउ किरिए सिय पंच किरिए ॥६७॥ पुरिसेणं भंते ! कच्छंसि वा जाव अन्नयरस्स मियस्स वहाए आययकन्नाययं उसुं आयामेत्ता चिट्ठिज्जा, अन्नयरे पुरिसे मग्गओ आगम्म सयपाणिणा असिणा सीसं छिन्देज्जा से य उसुं ताए चेव पुव्वायामणयाए तं विंधेज्जा सेणं भंते ! पुरिसे किं मियवेरेणं पुट्ठे पुरिसवेरेणं पुट्ठे ? गोयमा ! जे मियं मारेइ से मियवेरेणं पुट्ठे, जे पुरिसं मारेइ से पुरिसवेरेणं पुट्ठे, से केणट्ठेणं भंते ! एवं वुच्चइ जाव से पुरिसे वेरेणं पुट्ठे ? से नूणं गोयमा ! कज्जमाणे कडे संधिज्ज-माणे संधिए निवत्तिज्जमाणे निवत्तिए निसिरिज्ज-

आणे निसिट्ठे त्ति वत्तव्वं सिया ?, हंता भगवं कज्ज-माणे कडे जाव निसिट्ठत्ति वत्तव्वं सिया, से तेणट्ठे णं गोयमा ! जे मियं मारेइ से मियवेरेणं पुट्ठे, जे पुरिसं मारेइ से पुरिसवेरेणं पुट्ठे, ।। अंतो छण्हं मासाणं मरइ काइयाए जाव पंचहिं किरियाहिं पुट्ठे, बाहिं छण्हं मासाण मरइ काइयाए जाव परियावणियाए चउहिं किरियाहिं पुट्ठे ॥

—श्री भगवती सूत्र, शतक प्रथम, उद्देश ८ सूत्र ६८ ॥

टीका—'कच्छंसि वा'त्ति 'कच्छे' नदीजलपरिवेष्टिते वृक्षादि-मति प्रदेशे'दहंसि वा'त्ति ह्रदे प्रतीते 'उदगंसि वा'त्ति उदके—जलाश्रयमात्रे 'दवियंसि वा'त्ति 'द्रविके' तृणादिद्रव्यसमुदाये वलयंसि वा'त्ति 'वलये वृत्ताकारनद्याद्युदककुटिलगतियुक्तप्रदेशे 'नूमंसि वा' त्ति 'नूमे' अवतमसे 'गहणंसि वा'त्ति 'गहने' वृक्ष-वल्लीलतावितानवीरुत्समुदाये 'गहण विदुग्गंसि वा'त्ति गहन-विदुर्गे, पर्वतैकदेशावस्थितवृक्षवल्ल्यादिसमुदाये 'पव्वयंसि वा' त्ति पर्वते 'पव्वय विदुग्गंसि वा'त्ति पर्वतसमुदाये 'वणंसि वा'त्ति 'वने' एकजातीयवृक्षसमुदाये 'वणविदुग्गंसि वा'त्ति नाना-विधवृक्षसमूहे 'मिगवित्तीए'त्ति मृगैः—हरिणैर्वृत्ति—र्जीविका यस्य स मृगवृत्तिक, स च मृगरक्षकोऽपि स्यादिति अत आह— 'मियसंकप्पे'त्ति मृगेषु संकल्पो—वधाध्यवसायः छेदनं वा

यस्यासौ मृगसकल्प, स च चलचित्ततयाऽपि भवतीत्यत आह—'मियपणिहाणे'त्ति मृगवधैकाग्रचित्त 'मिगवहाए' त्ति मृगवधाय 'गंत'त्ति गत्वा कच्छादाविति योग 'कूडपासं' ति कूट च—मृगग्रहणकारण गर्त्तादि पाशश्च—तद्बन्धनमिति कूटपाशम 'उद्दाइ'त्ति मृगवधायोद्दालि, रचयतीत्यर्थ, 'तओ ण' ति तत कूटपाशकरणात् 'कइकिरिए'त्ति कति क्रिय ?, क्रियाश्च कायिक्यादिका, 'जे भविए'त्ति यो भव्यो योग्य कर्तेति यावत् 'जाव च ण'ि त शेप, यावन्त कालमित्यर्थ कस्या कर्त्ता इत्याह— 'उद्दवणयाए'त्ति कूटपाशधारणताया, ताप्रत्ययश्चेह स्वार्थिक, 'ताव च ण'ति तावन्त काल 'काइयाए'त्ति गमनादिकायचेष्टा- रूपया 'अहिगरणयाए'त्ति, अधिकरणेन—कूटपाशरूपेण निर्वृता या सा तथा तया पाउसियाए'त्ति प्रद्वेषो—मगेपु दुष्ट- भावस्तेन निर्वृत्ता प्राद्वेषिकी तथा 'तिहि किरियाहिं'ति क्रियन्त इति क्रिया—चेष्टाविशेषा, 'पारितावणयाए'त्ति परितापन- प्रयोजना पारितापनिकी, सा च बद्धे सति मृगे भवति प्राणाति- पातक्रिया च घातिते इति १ ॥ 'ऊसविए'त्ति उत्सर्यं ऊसिक्कि- उणेत्यर्थ ऊर्द्ध्वीकृत्येति वा 'निसिरइ'त्ति निसृजति—क्षिपति यावदिति शेष २ । 'उसु'ति बाणम् 'आययकण्णायत्तं'ति कर्णं यावदायत —आकृष्ट कर्णायत आयतं प्रयत्नवद् यथा भवती त्येवं कर्णायत आयतकर्णायतस्तम 'आयामेत्ता'त्ति 'आयम्य'

आकृष्य 'मग्गओ'त्ति पृष्ठत 'सयपाणिणा'न्ति 'स्वकपाणिना' स्वकहस्तेन 'पुव्वायामणयाए'त्ति पूर्वाकर्षणेन, 'से णं भंते! पुरिसे'त्ति 'स' शिरच्छेत्ता पुरुष 'सियवेरेणं'त्ति इह वैरं वैरहेतुत्वाद् वध पापं वा वैरं वैरहेतुत्वादिति, अथ शिरच्छेतृ-पुरुपहेतुकत्वादिपु निपातस्य कथं धनुर्द्धरपुरुषो मृगवधेन स्पृष्ट इत्याकृतवतो गौतमस्य तदभ्युपगतमेवार्थमुत्तरतया प्राह— क्रियमाण धनु काण्डादि कृतमिति व्यपदिश्यते ?, युक्तिस्तु प्राग्वत्, तथा सन्धीयमान—प्रत्यञ्चायामारोप्यमाण काण्डं धनुर्वाऽऽरोप्य-मानप्रत्यञ्च 'सन्धितं' कृतसन्धान भवति ?, तथा 'निर्वृत्यमान' नितरा वर्त्तुलीक्रियमाण प्रत्यञ्चाकर्षणेन निर्वृत्तित—वृत्तीकृत मण्ड-लाकार कृत भवति ?, तथा निसृज्यमाणं' निक्षिप्यमाणं काण्ड निसृष्ट भवति ?,यदा च निसृष्ट तदा'निसृज्यमानतायां धनुर्द्धरेण कृतत्वात् तेन काण्डं निसृष्टं भवति, काण्डनिसर्गाच्च मृगस्तेनैव मारित', ततश्चोच्यते—'जे मियं मारेइ' इत्यादीति ॥ ३ ॥ इह च क्रिया प्रक्रान्ता, ताश्चानन्तरोक्ते मृगादिवधे यावत्यो यत्र काल-विभागे भवन्ति तावतीस्तत्र दर्शयन्नाह—'अन्तो छण्ह'मित्यादि, षण्मासान् यावत् प्रहारहेतुकं मरण परतस्तु परिणामान्तरापादित-मितिकृत्वा षण्मासादूर्ध्वं प्राणातिपातक्रिया न स्यादिति हृदयम्, एतच्च व्यवहारनयापेक्षया प्राणातिपातक्रियाव्यपदेशमात्रोप-दर्शनार्थमुक्तम्, अन्यथा यदा कदाऽप्यधिकृतं प्रहारहेतुक मरणं भवति तदैव प्राणातिपातक्रिया, इति ४ ॥

मूलम्-दो भंते ! पुरिसा सरिसया सरित्तया सरिव्वया सरिसभंडमत्तोवगरणा अन्नमन्नेण सद्धिं संगामं संगामेन्ति, तत्थ णं एगे पुरिसे पराइणइ एगे पुरिसे पराइज्जइ, से कहमयं भंते ! एव ?, गोयमा सवीरिए पराइणइ अवीरिए पराइज्जइ, से केणट्ठेणं जाव पराइज्जइ ?, गोयमा ! जस्स णं वीरियवज्झाइं कम्माइं णो बद्धाइं णो पुट्ठाइं जाव नो अभिसमन्नागयाइं नो उदिन्नाइं उवसंताइं भवन्ति से णं पराइणइ, जस्स णं वीरियवज्झाइं कम्माइं बद्धाइं जाव उदिन्नाइं नो उवसंताइं भवन्ति से णं पुरिसे पराइज्जइ से तेणट्ठेणं गोयमा ! एवं वुच्चइ सवीरिए पराइणइ अवीरिए पराइज्जइ ॥

—श्री भगवती सूत्र १।८।७०॥

टीका—'सरिसय'त्ति सदृशकौ कौशलप्रमाणादिना 'सरित्तय'त्ति 'सदृक्त्वचौ, सदृशच्छवी वा 'सरिव्वय' त्ति सदृग्वयसौ समानयौवनाद्यवस्थौ 'सरिसभंडमत्तोवगरण'त्ति भाण्डं-भाजनं मृन्मयादि मात्रो—मात्रया युक्त उपधि स च कांस्यभाजनादि-भोजनभण्डिका भाण्डमात्रा वा—गणिमादिद्रव्यरूप परिच्छेदः उपकरणानि—अनेकधाऽऽवरणप्रहरणादीनि ततः सदृशानि भाण्डमात्रोपकरणानि ययोस्तौ तथा, अनेन च समानविभूतिकत्वं

तयोरभिहित, 'सवीरिएत्ति सवीर्यः 'वीरियवज्झाइ'ति वीय वध्यं येषा तानि तथा ॥

मूलम्—जीवा णं भंते! किं सवीरिया अवीरिया ?, गोयमा! सवीरियावि अवीरियावि, से केणट्ठेणं? गोयमा! जीवा दुविहा पन्नत्ता, तंजहा—संसारसमावन्नगा य असंसारसमावन्नगा य, तत्थ णं जे ते असंसारसमावन्नगा ते णं सिद्धा, सिद्धा णं अवीरिया, तत्थ णं जे ते संसारसमावन्नगा ते दुविहा पन्नत्ता, तंजहा—सेलेसिपडिवन्नगा य असेलेसिपडिवन्नगा य, तत्थ णं जे ते सेलेसिपडिवन्नगा ते णं लद्धिवीरिएणं सवीरिया करणवीरिएणं अवीरिया, तत्थ णं जे ते असेलेसिपडिवन्नगा ते णं लद्धिवीरिएणं सवीरिया करणवीरिएणं सवीरियावि अवीरियावि, से तेणट्ठेणं गोयमा! एवं वुच्चइ—जीवा दुविहा पण्णत्ता, तंजहा—सवीरियावि अवीरियावि। नेरइया णं भंते! किं सवीरिया अवीरिया? गोयमा! नेरइया लद्धिवीरिएणवि सवीरिया करणवीरिएणं सवीरियावि अवीरियावि! से केणट्ठेणं ?, गोयमा! जेसिं णं नेरइयाणं अत्थि उट्ठाणे कम्मे बले वीरिए पुरिसक्कारपरक्कमे ते णं नेरइया लद्धिवीरिएणवि

सवीरिया करणवीरिएणवि सवीरिया, जेमि णं नेरइया ण नत्थि उट्ठाणे जाव परक्कमे ते णं नेरइया लद्धिवीरिएणं सवीरिया करणवीरिएणं अवीरिया, से तेणट्ठेणं०, जहा नेरइया एव जाव पंचिंदियतिरिक्खजोणिया, मणुस्सा जहा ओहिया जीवा, नवरं सिद्धवज्जा भाणियव्वा, वाणमंतरज इसवेमाणिया जहा नेरइया, सेवं भंते! सेवं भंते'त्ति ॥

—श्री भगवती सूत्र १।८।७१॥

टीका—सिद्धाण 'अवीरिय'त्ति सकरणवीर्याभावादवीर्या सिद्धा 'सेलेसियडिवन्नगा य'त्ति शीलेश—सर्वसंवररूपचरण-प्रभुस्तस्येयमवस्था, शैलेशो वा - मेरुस्तस्येव याऽवस्था स्थिरतासा-धर्म्यात्सा शैलेशी, सा च सर्वथा योगनिरोधे पंचह्रस्वाक्षरो-च्चारकालमाना ता प्रतिपन्नका ये ते तथा, 'लद्धिवीरिएण सवीरिय' त्ति वीर्यान्तरायक्षयक्षयोपशमतो या वीर्यस्य लब्धि सैव तद्धे-तुत्वाद्वीर्य लब्धिवीर्यतेन सवीर्या, एतेपा च क्षायिकमेव लब्धि-वीर्यं 'करणवीरिएण' ति लब्धिवीर्यकार्यभूता क्रिया करण तद्रूपं करणवीर्यम, 'करणवीरिएण सवीरियावि अवीरियावि' त्ति तत्र सवीर्या' उत्थानादिक्रियावन्त. अवीर्यास्तूत्थानादिक्रियाविकला, ते चापर्याप्त्यादिकालेऽवगन्तव्या इति। 'नवरं सिद्धवज्जा भाणि-यव्व त्ति, औधिकजीवेषु सिद्धा सन्ति मनुष्येषु तु नेति, मनुष्यदण्डके वीर्यं प्रति सिद्धस्वरूप नाध्येयमिति ॥

मूलम्-खंदयाति समणे भगवं महावीरे खंदयं कच्चाय० एवं वयासी--से नूणं तुम खंदया! सावत्थीए नयरीए पिंगलएणं णियठेणं वेसालियसावएणं इणमक्खेव पुच्छिए मागहा! किं सअंते लोए अणंते लोए एवं तं जेणेव मम अंतिए तेणेव हव्वमागए, से नूणं खंदया! अयमट्ठे समट्ठे? हंता अत्थि, जेविय ते खंदया! अयमेयारूवे अब्भत्थिए चिन्तिए पत्थिए मणोगए संकप्पे समुपज्जित्था--किं सअंते लोए अणंते लोए? तस्सविय णं अयमट्ठे—एवं खलु मए खंदया! चउव्विहे लोए पन्नत्ते, तंजहा--दव्वओ खेत्तओ कालओ भावओ। दव्वओ णं एगे लोए सअंते?, खेत्तओ णं लोए असंखेज्जाओ जोयणकोडाकोडीओ आयामविक्खंभेणं, असंखेज्जाओ जोयण-कोडाकोडीओ परिक्खेवेणं प० अत्थि पुण सअन्ते?, कालओ णं लोए ण कयावि न आसी न कयावि न भवति न कयावि न भविस्सति भुविंसु य भवति य भविस्सइ य धुवे णितिए सासते अक्खए अव्वए अवट्ठिए णिच्चे, णत्थि पुण से अन्ते २, भावओ णं लोए अणंता वण्ण पज्जवा गंध० रस०

फासपज्जवा, अणंता संठाणपज्जवा अणंता गरुय-लहुयपज्जवा, अणंता अगरुयलहुयपज्जवा, नत्थि पुण से अंते ४, सेत्तं खंदगा ! दव्वओ लोए सअन्ते खेतओ लोए सअन्ते कालतो लोए अणंते भावओ लोए अणंते । जेवि य ते खंदया ! जाव सअन्ते जीवे अणंते जीवे, तस्सवि य णं अयमट्ठे—एवं खलु जाव दव्वओ णं एगे जीवे सअन्ते, खेत्तओ णं जीवे असंखेज्जपएसिए असंखेज्ज-पदेसोगाढे अत्थि पुण से अन्ते,, कालओ णं जीवे न कयावि न आसि जाव निच्चे नत्थि पुण से अंते, भावओ णं जीवे अणंता णाणपज्जवा अणंता दंसणप० अणंता चरित्तप० अणंता अगुरुलहुयप० नत्थि पुण से अन्ते, सेत्तं दव्वओ जीवे सअन्ते खेत्तओ जीवे सअन्ते कालओ जीवे अणंते, भावओ जीवे अणंते । जेवि य ते खंदया ! पुच्छा०(इमेयारूवे चिंतिए जाव सअन्ता सिद्धि अणंता सिद्धी) तस्स वि य णं अयमट्ठे खंदया ! मए एवं खलु चउव्विहा सिद्धी पण्ण०, त०—दव्वओ ४, दव्वओ णं एगा सिद्धी खेत्तओ णं सिद्धी पणयालीसं जोयणसय-सहस्साइं आयामविक्खंभेणं एगा जोयणकोडी बायालीसं च जोयणसयसहस्साइं तीसं च जोयण

सहस्साइं दोन्नि य अउणापन्नजोयणसए किंचि विसेसाहिए परिक्खेवेणं अत्थि पुण से अन्ते, कालओ णं सिद्धी न कयावि न आसि, भावओ य जहा लोयस्स तहा भाणियव्वा, तत्थ दव्वओ सिद्धी सअन्ता खे० सिद्धी सअन्ता का० सिद्धी अणंता भावओ सिद्धी अणंता। जेवि य ते खंदया! जाव किं अणंते सिद्धे तं चेव जाव दव्वओ णं एगे सिद्धे सअन्ते, खे० सिद्धे असंखेज्जपएसिए असंखेज्ज-पदेसोगाढे, अत्थि पुण से अन्ते, कालओ णं सिद्धे सादीए अपज्जवसिए नत्थि पुण से अन्ते, भा० सिद्धे अणंता णाणपज्जवा, अणंता दंसणपज्जवा जाव अणंता अगुरुलहुयप० नत्थि पुण से अन्ते, सेत्तं दव्वओ सिद्धे सअन्ते खेत्तओ सिद्धे सअन्ते का० सिद्धे अणंते भा० सिद्धे अणंते। जेवि य ते खंदया! इमेयारूवे अब्भत्थिए चिंतिए जाव समुपज्जित्था— केण वा मरणेणं मरमाणे जीवे वड्ढति वा हायति वा?, तस्सवि य णं अयमट्ठे एवं खलु खंदया! मए दुविहे मरणे पण्णत्ते, तंजहा—बालमरणे य पंडियमरणे य. से किं त बालमरणे?, २ दुवालसविहे प०, त० वलयमरणे वसट्टमरणे अंतो-

युष्कोदया इत्यर्थः 'समोववन्नग'त्ति विवक्षितायुष क्षये समकमेव भवान्तेर उपपन्ना समोपपन्नका, ये चैवंविधास्ते समकमेव प्रस्थापितवन्त—समकमेव निष्ठापितवन्त. नन्वायुःकर्मैवाश्रित्यैवमुपपन्न भवति न तु पापं कर्म, तद्धि नायुष्कोदयापेक्षं प्रस्थाप्यते चेति, नैव, यतो भवापेक्ष कर्मणामुदय क्षयश्चेष्यते. उक्तञ्च—''उदयक्खयक्खवओवसमे'त्यादि अत एवाह—'तत्थणं जे ते समाउया समोववन्नगा ते णं पाव कम्म समाय पट्ठविसु समायं निट्ठविंसु'त्ति प्रथम, तथा 'तत्थ ण जे ते समाउया विसमोववन्ना'त्ति समकालायुष्कोदया विषमतया परभवोत्पन्ना मरणकालवैषम्यात् 'ते समाय पट्ठविंसु' त्ति आयुष्कविशेषोदयसम्पाद्यत्वात्पापकर्मवेदनविशेषस्य 'विसमायं निट्ठविंसु'त्ति मरणवैषम्येन पापकर्मवेदनविशेषस्य विषमतया निष्ठासम्भवादिति द्वितीय, तथा 'विसमाउया समोववन्नग'त्ति विषमकालायुष्कोदय समकालभवान्तरोत्पतय 'ते ण पाव कम्म विसमायं पट्ठविसु समायं निट्ठविंसु'त्ति तृतीय, चतुर्थ सुज्ञात एवेति, इह चैतान भङ्गकान प्राक्तनशतभङ्गकांश्चाश्रित्य वृद्धैरुक्तम्—"पट्ठवणमाइ किह्णु हु समाउ उववन्नएसु चउभगो। किह व समज्जणमाग गमणिज्जा अत्थओ भंगा ? ॥१॥ पट्ठवणमाए भगा पुच्छाभंगाणलोमओ वच्चा।" यथा पृच्छाभगा समकप्रस्थापनादयो न वध्यन्ते तथेह समायुष्कादय अन्यत्रान्यथा व्याख्याता अपि व्याख्येया

इत्यर्थ । "कम्मसमज्जणसए बाहुल्लाओ समाउज्जा ॥२॥" [प्रस्थापनशते समायुरुत्पन्नेषु चतुर्भङ्गी कथं नु कथं वा समर्जनशते भङ्गा अर्थतो गम्या. ? ॥१॥ प्रस्थापनशते भङ्गानां पृच्छा भङ्गानुलोम्यतो वाच्या। कर्मसमर्जनशते बाहुल्यात् समायोजयेत् ॥ १ ॥] इति ॥

# श्री ज्ञाता सूत्र

हे शुक ! अस्माकं धर्मः स्याद्वादात्मकः सप्तनयाश्रितो वर्तते, अपरे धर्माः प्रत्येकनयाश्रिताः अत सप्तनयानां स्वरूपं शृणु तथा चोक्तमागमे—'कइविहा णया पण्णत्ता, गोयमा ? सत्तमूलनया पण्णत्ता तं० जहा—णेगमे १ संगहे २ ववहारे ३ उज्जुसुत्ते ४ सद्दे ५ समभिरूढे ६ एवंभूत ७ इति ॥ नैगम इति न एकं नैकं प्रभूतानीत्यर्थः, नैकैर्मानैर्महासत्व सामान्यविशेष-ज्ञानैर्मिमीते मिनोति इति वा नैकमसामान्यविशेपो नयरूपज्ञानै-र्वस्तु मन्यते पण्ठमेकभेदेन न मन्यते इत्यर्थ, न विद्यते एको गमो मार्गः सामान्यलक्षणो विशेपलक्षणो वा यस्य स नैगमिकः एव नयः सम्यग्दृष्टिवत् सामान्यविशेपाभ्यां वस्तु आनयति तस्मादेपो नयः सम्यग्दृष्टिनो भवति इति ॥१॥ तथा संग्रह इति भेदानां संग्रहः संगृह्णाति भेदान् वा संग्रह, स नयः समुच्चयेन

वस्तु आनयति, यथा कश्चिद् वनं दृष्ट्वा वदत्यग्रे वनमस्ति परं विशेषण न वक्ति, पशुपक्षितटाकाकीर्णं वन वर्तते इति न वदति, स कथयति विशेपस्तु सामान्यमध्य एवास्ति इति ॥४॥ व्यवहरणं व्यवहार, येन व्यह्रियते स व्यवहार. स तु विशेषवस्तु मन्यते, स च कथयति सामान्य विशेषाद् भिन्नं न वर्तते, केवलं सामान्यत्वेन लोकव्यवहारो न प्रवर्तते यथा भ्रमरादौ सामान्यत्वेन पंचवर्णाः सन्ति, परं कृष्णवर्णस्य बहुतरत्वेन विशेषेण, येन लोकव्यवहारेण भ्रमर कृष्ण एव निगद्यते इति, पुनर्बाह्यस्वरूप दृष्ट्वा भेद विवेक्ति, ये वाह्यदृष्ट्या गुणान् पश्यन्ति तानेव मन्यते नान्तरङ्गत्वेन, एतावता व्यवहारनये आचारक्रिया मुख्या वर्तते अन्तरङ्गपरिणामोपयोगो नास्ति, यतो नैगमसङ्ग्रहयोर्ज्ञानात्मध्यानस्य परिणमन, तत्र क्रिया मुख्यास्ति व्यवहारनयेन। जीवव्यवस्था नैकधा वर्तते, तत्रनैगमसग्रहाभ्यां सर्वजीवसत्ता एकरूपैव, परं व्यवहारेण जीवो द्विविध —सिद्ध १ संसारी च, तत्र संसारीजीवो द्विविध, अयोगी चतुर्दशगुणस्थानवर्ती शैलावस्थाया वर्तमानो जीव १, सयोगी च २, तत्र सयोगी द्विविध —त्रयोदशगुणस्थानवर्ती केवली—छद्मस्थश्च, छद्मस्थो द्विविध क्षीणमोहद्वादशगुणस्थानवर्ती मोहनीयकर्म क्षपयति स जीव १, द्वितीय उपशान्तमोहश्च २, उपशान्तमोहस्य द्वौ भेदौ, अकषायी एकादशगुणस्थानवर्ती जीव १ सकषायी च, सकषायिणो द्वौ भेदौ. एकः सूक्ष्मसकषायिदशमगुणस्थानस्थ १, बादरकषायी, बादरकषायी द्विविध श्रेणिप्रतिपन्न श्रेणि-

र्जितश्च श्रेणिवर्जितस्य द्वौ भेदौ अप्रमत्त प्रमत्तश्च, प्रमत्तस्य द्वौ भेदौ, सर्वविरति १, देशविरतिश्च २, देशविरतिर्द्विविध —विरतिपरिणाम १ अविरतिपरिणामश्च २, तत्राविरतिर्द्विविध —अविरति-सम्यकत्वी १ मिथ्यात्वी च २ मिथ्यात्विनो द्वौ भेदौ—भव्य १ अभव्यश्च २, भव्यो द्विविध —ग्रन्थीभेदी १ ग्रन्थ्यभेदी च, एवं याद्दशो जीवो दृश्यते त ताद्दशमेव मन्यते स व्यवहारनय ॥३॥ ऋजु—अवक्र श्रुत ज्ञानमस्ति यस्य स ऋजुसूत्र अथवा अतीतानागतरूपवक्रपरित्यागेन ऋजु - सरल वर्तमानकालमानयति इति ऋजुसूत्र, तत्रातीतकालस्तु विनष्ट अनागतश्चानुत्पन्नोऽस्ति दृश्यतेऽपि न आकाशपुष्पवत् कालद्वय न मन्तव्यम्, ततो वर्तमानकालेन भावित भाव सूत्रयति इति ऋजुसूत्रं परिणामग्राही वर्तते, यदा यो जीवो गृही वर्तते परमन्त परिणामै साधुतुल्यस्तदा स जीव साधुरेव कथ्यते, पुनर्यो जीव साधुवेषधारी वर्तते पर मनसि विषयाभिलाषयुक्ता परिणामा वर्तन्ते तदा स जीवोऽविरतिमानी च ॥४॥ शप्यते-थाक्रोश्यते, उच्यते वस्तु अनेनेति शब्द तेनोपचारान्नयोऽपि शब्द एवोच्यते शब्दनयोऽपि ऋजुसूत्रनयसदृशो मन्तव्य एषोऽपि वस्तुस्वरूपग्राही ऋजुशब्दनयो यदि सदृशौ तर्हि तयो क प्रतिभेद ? उच्यते ऋजुसूत्रनयवादी सामान्यगतार्थं गृह्णाति, पर लिङ्गवचनभेद किमपि न करोति, यथा तट पुल्लिङ्ग, तटी स्त्री, तट नपुंसकं पर

ऋजुसूत्रनय. केवल तटस्यार्थं गृह्णाति लिङ्गविशेष किमपि न मानयति, शब्दनयवादी तु विशेषपदं गृह्णाति शब्दाना लिङ्गवचनानां ये भेदा सन्ति तान् विशेषत पृथक् २ गृह्णाति तथा सम्यक् प्रकारेण कार्यसाधकं शब्द मानयति यथा इन्द्रशब्दं मानयति, यथा इन्द्रशब्दस्य चत्वारो निक्षेपा नामादिभेदेन सति, पर शब्दनयवादी वदति नामेन्द्र १ स्थापनेन्द्रद्रव्येन्द्रै किमपिकार्यसिद्धिर्न भवति इति यतस्ते नामेन्द्रादय इन्द्रकार्यकरणे न समर्था यदा भावेन्द्रो भविष्यति तदा इन्दनाद् इन्द्र. इति शब्द स्वकार्यकारिष्यतीति । निक्षेपेण विचारो बहुतरोऽस्ति ग्रन्थगौरवभयान्नोलिखितम् इति ॥ ५ ॥ नानार्थेषु नानासंज्ञानामारोहणात् समभिरूढनय, एष नयो घटकुटादीन भिन्नप्रवृत्तिनिमित्तत्वात् भिन्नार्थगोचरान् मानयति घटपटादिशब्दवत् । तथा घटनाद् घटो विशिष्टचेष्टावान् अर्थो घट इति तथा कुट कौटिल्ये कौटिल्ययोगात् कुटो घटोऽन्य कुटोऽप्यन्य एवेति ६, तथा यस्य पदार्थस्य योऽर्थोऽस्ति तमर्थं कुर्वन्त प्रभूतं सन्त पदार्थं मानयति पुन स्वार्थस्याक्रियावेलाया त पदार्थमसन्त मानयति स एवभूतनय, यदा स्त्रीमस्तके घटश्चाटितो भवति तदा चेष्टासहितो घट चेष्टायाम् धातो चेष्टारूपार्थकरणवेलाया घट प्रति घटं कृत्वा मानयति ॥७॥ एतेषा मध्ये ये प्राक्तनास्त्रयो नया द्रव्य मन्यन्ते, तत्र नैगमव्यवहारौ अशुद्धद्रव्य मन्येते, संग्रहस्तु शुद्धद्रव्य मन्यते, तत कारणादेते त्रयो द्रव्यनया उच्यन्ते ।

उत्तरि ता त्वारो नया. पर्याय मन्यन्तेऽनमने पर्यायनया इति।
विशेषविचारस्तु सिद्धान्तान्तरादवसेय इति ॥

अथानुयोगद्वारसूत्र तः सप्तनयानां दृष्टान्तो लिख्यते—यथा केनचित् पुरुषेण कश्चित् पुरुष पृष्ट भवान् कुत्र वसति? तदा तेनाशुद्धनैगमवादिनैव उक्त लोकमध्ये वसामि पुन पृष्ट, लोकस्य त्रयो भेदा – ऊर्ध्वाधस्तिर्य लोका तत्र कस्मिल्लोके वसति। तदाऽशुद्धनैगमवादिना प्रोक्त—तिर्यग् लोके वसामि पुन पृष्ट तिर्यग् लोके असख्येया द्वीपसमुद्राश्च सन्ति तस्मात् कस्मिन द्वीपे तिष्ठति तदाऽविशुद्धनैगमवादिनोक्त, जम्बूद्वीपमध्ये तिष्ठामि, पुन पृष्ट जम्बूद्वीपे बहूनि क्षेत्राणि सन्ति, भवान कस्मिन क्षेत्रे तिष्ठति, तदा तेनाऽविशुद्धनैगमवादिनोक्तम्—भारतक्षेत्रे तिष्ठामि, पुन. पृष्ट, भ तस्य पट् खण्डानि, खण्डेषु मध्यखण्ड तस्मिन देशा नगराणि ग्रामाश्च बहव सन्ति, त्व कुत्र तिष्ठसि? तदा प्रथमनयवादी वदति—अमुकदेशे नगरे ग्रामे वा अमुक पाटके वा वसामि। तत्रैतत्पर्यन्त नैगमनयो ज्ञेय। अथ सग्रहनयवादी वदति—स्वशरीरे वसामि। तदा व्यवहारनयवादी वक्ति—स्वसस्तारके वसामि। ऋजुसूत्रवादी वदति स्वस्वभावे तिष्ठामि। समभिरूढवादिना प्रोक्त स्वगुणेषु तिष्ठामि, एवभूतनयवादिना प्रोक्तम्—ज्ञानदर्शनगुणेषु वसामि। इति दृष्टान्त सर्वपदार्थेषु ज्ञेय इति ॥

अथ सप्तनयैर्धर्म दर्श्यते— प्रथमनैगमवादी वदति सर्वे धर्मा

सन्ति, येन कारणेन सर्वे धर्माः कथयन्ति, अयं नयोऽशरूपो धर्मनाम कथयति, तदा संग्रहनय उवदत्—यैर्वृद्धपुरुषैराचरितं तद्धर्मः कथ्यते, अनाचारस्त्यक्त्वा परं कुलाचारो धर्मः कथितः—तदा व्यवहारनयेन प्रोक्तम्—यः सुखहेतुः स धर्मः अर्थात्—पुण्यकर्मकारणो धर्मः मानितस्तदा ऋजुसूत्रनयेन प्रोक्तम्—यः उपयोगसत्ववैराग्यरूपपरिणामः स धर्मः कथ्यते; अस्मिन्नये यथा प्रवृत्तिकरस्य परिणामप्रमुखाः सर्वे धर्माः कथिताः ते मिथ्यात्विनोऽपि भवन्ति, तदा शब्दनयोऽवदत्—यः सम्यक्त्वः स एव धर्मस्य मूलं सम्यक्त्वं, तदा समभिरूढनयो वदति—यो जीवाजीवादीन् पदार्थान् जानाति जीवसत्तां ध्यायति, अजीवस्य त्यागं करोति, ईदृशो ज्ञानदर्शनचरित्राणां शुद्धनिश्चयपरिणामः स धर्मः। अस्मिन् नये साधकसिद्धपरिणामास्ते धर्मत्वेन गृहीताः, तदा एवंभूतनयो वक्ति—शुक्लध्यानरूपातीतपरिणामैः क्षपकश्रेण्यां कर्मक्षयहेतुः स धर्मः, यो जीवस्यमूलस्वभावो धर्मो मोक्षरूपं कार्यं करोति, एवं सप्तनयैर्धर्मः कथ्यते। सप्तनयानामेकत्रमीलनात् सम्यक्त्वं वर्तते, सप्तनयग्राही सम्यक्त्वं उच्यते, य एकनयग्राही स मिथ्यादृष्टिरुच्यते, एवं सप्तनयैर्यत् सिद्धं वचनं तत प्रमाणमस्ति। सप्तनयानां मध्ये यः कोऽप्येक नयमुत्थाप्यते तस्य वचनमप्रमाणं भवेदिति ॥

# श्री रायपसेणी सूत्र

मूलम्–पउमवरवेइया णं भंते ! किं सासया० ?, गोयमा ! सिय सासया सिय असासया, से केणट्ठेणं भंते ! एवं वुच्चइ सिय सासया सिय असासया ?, गोयमा ! दव्वट्ठयाए सासया वण्णपज्जवेहिं गंधपज्जवेहिं रसपज्जवेहिं असासया, से तेणट्ठेणं गोयमा ! एवं-वुच्चति–सिय सासया सिय असासया । पउमवरवेइयाणं भंते ! कालओ केवच्चिरं होइ ?, गोयमा ! ण कयावि णासि ण कयावि णत्थि न कयावि न भविस्सइ, भुविं च हवइ य भविस्सइ य, धुवा णिइया सासया अक्खया अव्वया अवट्ठिया णिच्चा पउमवरवेइया ।

श्री रायपसेणी सूत्र विमान वर्णन सूत्र ३४ ॥

टीका पउमवरवेइया णं भंते ! किं सासया' इत्यादि, पद्म-वरवेदिका'णं' मिति पूर्ववत् किं शाश्वती उताशाश्वती, आबन्त-तया सूत्रे निर्देश प्राकृतत्वात्, कि नित्या उतानित्येतिभाव, भगवानाह- गौतम ! स्यात् शाश्वती स्यादशाश्वती, कथचिन्नित्या कथचिदनित्या इत्यर्थ, स्याच्छब्दो निपात कथंचिदित्येतदर्थ-वाची, 'से केणट्ठ णं' मित्यादि, प्रश्नसूत्र सुगम, भगवानाह-गौतम ! द्रव्यार्थतया—द्रव्यास्तिकनयमतेन शाश्वती, द्रव्यास्तिक-नयो हि द्रव्यमेव तात्त्विकमभिमन्यते न पर्यायान्, द्रव्यं—चान्वयि परिणामित्वात्, अन्वयित्वाच्च सकलकालभावीति भवतिद्रव्या-र्थतया शाश्वती, वर्णपर्यायैस्तत्तदन्यसमुत्पद्यमानवर्णविशेपरूपै, एव गन्धपर्यायै रसपर्यायै स्पर्शपर्यायै उपलक्षणमेतत्, तत्तदन्य-पुद्गलविचटनोच्चटनैश्च अशाश्वती, पर्यायाणा प्रतिक्षणभावितया कियत्कालभावितया विनाशित्वात्, 'से एएणट्ठेणं' मित्याद्युप-सहारवाक्य सुगम, इह द्रव्यास्तिकनयवादी स्वमतप्रतिष्ठापनार्थ-मेवमाह—नात्यन्तासत उत्पादो नापि सतो नाश 'नासतो विद्यते भावो, नाभावो विद्यते सत ' इति वचनात्, यौ तु दृश्येते प्रति-वस्तु उत्पादविनाशौ तदाविर्भावतिरोभावमात्र, यथा सर्पस्य उत्फ-णत्वविफणत्वे, तस्मात् सर्व वस्तु नित्यमिति, एव च तन्मतचि-न्तायां सगय —कि यदाविर्भाव द्रव्यार्थतया शाश्वती उत सकल-कालनेकरूपेति, तत संशयापनोदार्थं भगवन्त भूय पृच्छति—

# श्री जीवाभिगम सूत्र

मूलम्—इमीसे णं भंते ! रयणाप० पु० सव्वजीवा उववरणा पुव्वा ? सव्वजीवा उववरणा ?; इमीसे णं रय० पु० सव्वजीवा उववरणापुव्वा नो चेव णं सव्वजीवा उववरणा, एव जाव अहेसत्तमाए पुढवीए ॥ इमा णं भंते ! रयण० पु० सव्वजीवेहिं विजढपुव्वा ? सव्वजीवेहिं विजढा ? गोयमा ! इमा णं रयण० पु० सव्वजीवेहिं विजढपुव्वा नो चेव ण सव्वजीवविजढा, एवं जाव अधेसत्तमा ॥ इमीसे णं भंते ! रयण० पु० सव्वपोग्गला पविट्ठपुव्वा ? सव्वपोग्गला पविट्ठा ? गोयमा ! इमी से ण रयण० पुढवीए सव्वपोग्गला पविट्ठपुव्वा नो चेव णं सव्वपोग्गला पविट्ठा, एवं जाव अधेसत्तमाय पुढवीए ॥ इमा णं भंते ! रयणप्पभा पुढवी सव्वपोग्गलेहिं

विजढपुव्वा ? सव्वपोग्गला विजढा ?, गोयमा ! इमा णं रयणप्पभा पु० सव्वपोग्गलेहिं विजढपुव्वा नो चेव णं सव्वपोग्गलेहिं विजढा, एवं जाव अधेसत्तमा ॥

—श्री जीवाभिगम सूत्र प्रतिपत्ति ३ सू० ७७१ ॥

टीका—'इमीसे णं भंते ! ' इत्यादि. अस्या भदन्त ! रत्नप्रभाया पृथिव्या सर्वजीवा. सामान्येन उपपन्नपूर्वा इति—उत्पन्नपूर्वा कालक्रमेण, तथा सर्वजीवा 'उपपन्ना' उत्पन्ना युगपद् ?, भगवानाह—गौतम ! अस्या रत्नप्रभाया पृथिव्या सर्वजीवा सांव्यवहारिकजीवराश्यन्तर्गता प्रायोवृत्तिमाश्रित्य सामान्येन 'उपपन्नपूर्वा' उत्पन्नपूर्वा कालक्रमेण, संसारस्यानादित्वात्, न पुन सर्वजीवाः 'उपपन्ना' उत्पन्ना युगपत्, सकलजीवानामेककालं रत्नप्रभापृथिवीत्वेनोत्पादे सकलदेवनारकादि भेदाभावप्रसक्तेः, न चैतदस्ति, तथाजगत्स्वाभाव्यात्, एवमेकैकस्या पृथिव्यास्तावद्वक्तव्यं यावदध सप्तम्याः ॥ 'इमा णं भंते !' इत्यादि इयं च भदन्त ! रत्नप्रभापृथिवी 'सव्वजीवेहिं विजढपुव्वा' इति सर्वजीवै कालक्रमेण परित्यक्तपूर्वा, तथा सर्वजीवैर्युगपद् 'विजढा' परित्यक्ता ?, भगवानाह—गौतम ! इयं रत्नप्रभा पृथिवी प्रायोवृत्तिमाश्रित्य सर्वजीवै सांव्यवहारिक कालक्रमेण परित्यक्तपूर्वा, न तु युगपत्परित्यक्ता, सर्वजीवै एककालपरित्यागस्यासम्भवात् तथा-

निमित्ताभावात्, एवं तावद्वक्तव्यं यावदध सप्तमी पृथ्वी ॥ 'इमीसे रण' मित्यादि, अस्यां भदन्त ! रत्नप्रभायां पृथिव्यां सर्वे पुद्गला लोकोदरविवरवर्त्तिन कालक्रमेण 'प्रविष्टपूर्वा' तद्भावेन परिणतपूर्वा, तथा सर्वे पुद्गला 'प्रविष्टा' एककालं तद्भावेन परिणता ?, भगवानाह—गौतम ! अस्यां रत्नप्रभायां पृथिव्या सर्वे पुद्गला लोकवर्तिन 'प्रविष्टपूर्वाः' तद्भावेन परिणतपूर्वा, संसारस्यानादित्वात्, न पुनरेककाल सर्वपुद्गला 'प्रविष्टा' तद्भावेन परिणता सर्वपुद्गलानां तद्भावेन परिणतौ रत्नप्रभा-व्यतिरेकेणान्यत्र सर्वत्रापि पुद्गलाभावप्रसक्ते, न चैतदस्ति, तथा-जगत्स्वाभाव्यात्। एवं सर्वासु पृथिवीषु क्रमेण वक्तव्यं यावद-ध सप्तम्यां पृथिव्यामिति ॥ 'इमा णं भंते !' इत्यादि, इय भदन्त ! रत्नप्रभा पृथिवी सर्वपुद्गलै कालक्रमेण 'विजढपुव्वा' इति परि-त्यक्तपूर्वा तथैव सर्वै पद्गलैरेककाले परित्यक्ता ?, भगवानाह— गौतम ! इय रत्नप्रभा पृथिवी सर्वपुद्गलै कालक्रमेण परित्यक्तपूर्वा, संसारस्यानादित्वात्, न पुन सर्वपुद्गलैरेककालं परित्यक्ता, सर्व-पुद्गलैरेककालपरित्यागे तस्या सर्वथा स्वरूपाभावप्रसक्ते, न चैतदस्ति, तथाजगत्स्वाभाव्यत शाश्वतत्वात्, एतच्चानन्तरमेव वक्ष्यति। एवमेकैका पृथिवी क्रमेण तावद्वाच्या यावदध सप्तमी पृथिवी ॥

मूलम्—इमा णं भंते ! रयणप्पभा पुढवी किं सासया असासया ?, गोयमा ! सिय सासता सिय असा-

मया ॥ से केणट्ठेणं भंते ! एवं वुच्चइ–सिय सासया सिय असासया ?, गोयमा ! दव्वट्ठयाए सासता, वण्णपज्जवेहि गंधपज्जवेहिं रसपज्जवेहिं फासपज्जवेहिं असासता, से तेणट्ठेणं गोयमा ! एव वुच्चति–तं चेव जाव सिय असासता, एवं जाव अधेसत्तमा ॥ इमा णं भंते ! रयणप्पभाए० कालतो केवच्चिरं होइ ?, गोयमा ! न कयाइ ण आसि ण कयाइ णत्थि ण कयाइ ण भविस्सति ॥ भुविं च भवइ य भविस्सति य धुवा णियया सासया अक्खया अव्वया अवट्ठिता णिच्चा एवं जाव अधे सत्तमा ॥

—श्री जीवाभिगम मलयागिरि वृत्ति प्रति० ३ सूत्र ७८ ॥

टीका–'इमा णं भंते !' इत्यादि इयं भदन्त ! रत्नप्रभा पृथिवी किं शाश्वती अशाश्वती ?, भगवानाह—गौतम ! स्यात्—कथञ्चित्कस्यापि नयस्याभिप्रायेणेत्यर्थः शाश्वती, स्यात्—कथञ्चिद्-शाश्वती ॥ एतदेव सविशेषं जिज्ञासुः पृच्छति—'से केणट्ठेणं' मित्यादि, सेशब्दोऽथशब्दार्थः स च प्रश्ने, केन अर्थेन' कारणेन भदन्त ! एवमुच्यते यथा स्यात् शाश्वती स्यादशाश्वतीति ?, भगवानाह—गौतम ! 'दव्वट्ठयाए' इत्यादि, द्रव्यार्थतया शाश्व-तानि तत्र द्रव्यं सर्वत्रापि सामान्यमुच्यते, द्रव्याणि—गन्धानि तानि तान पर्यायान विशेषानिति वा द्रव्यमिति व्युत्पत्तेर्द्रव्यमेवार्थः—

तात्त्विक पदार्थो यस्य न तु पर्याया स द्रव्यार्थ —द्रव्यमात्रास्तित्व-प्रतिपादको नयविशेपस्तद्भावो द्रव्यार्थता तया द्रव्यमात्रास्तित्व प्रतिपादकनयाभिप्रायेणेतियावत् शाश्वती, द्रव्यार्थिकनयमतपर्या-लोचनायामेवंविधस्य रत्नप्रभाया पृथिव्या आकारस्य सदा भावात्, 'वर्णपर्यायै.' कृष्णादिभि 'गंधपर्यायै' सुरभ्यादिभि 'रसपर्यायै' तिक्तादिभि 'स्पर्शपर्यायै' कठिनत्वादिभि 'अशाश्वती, अनित्या, तेषा वर्णादीनां प्रतिक्षणं कियत्कालानन्तरं वाऽन्यथाभवनात्, अतादवस्थ्यस्य चानित्यत्वात् न चैवमपि भिन्नाधिकरणे नित्यत्वा-नित्यत्वे, द्रव्यपर्याययोर्भेदाभेदोपगमात्, अन्यथोभयोरप्यसत्त्वा-पत्ते, तथाहि—शक्यते वक्तु परपरिकल्पित द्रव्यमसत्, पर्याय-व्यतिरिक्तत्वात्, बालत्वादिपर्यायशून्यवन्ध्यासुतवत् तथा परपरि-कल्पिता: पर्याया असन्त, द्रव्यव्यतिरिक्तत्वात्, वन्ध्यासुतगत-बालत्वादिपर्यायवत्, उक्तञ्च "द्रव्यं पर्यायवियुतं, पर्याया द्रव्य-वर्जिता। क कदा केन किंरूपा?, दृष्टा मानेन केन वा? ॥१॥", इति कृतं प्रसङ्गेन, विस्तरार्थिना च धर्मसंग्रहणिटीका निरूपणीया। 'से तेणट्ठे णं' मित्याद्युपसंहारमाह, सेशब्दोऽथशब्दार्थे स चात्र वाक्योपन्यासे अथ 'एतेन' अनन्तरोदितेन कारणेन गोतम! एव-मुच्यते—स्यात् शाश्वती स्याद् शाश्वती, एव प्रतिपृथिवि तावद्वक्तव्य यावदध सप्तमी पृथिवी, इह यद् यावत्सम्भवास्पद तच्चेत्तावन्त कालं शाश्वद्भवति तदा तदपि शाश्वतमुच्यते यथा तन्त्रान्तरेषु

मूलम्–सासया णं ते णरगा दव्वट्ठयाए वण्णपज्जवेहिं गंधपज्जवेहिं रसपज्जवेहिं फासपज्जवेहिं असासया एव जाव अहे सत्तमाए ॥

--श्री जीवाभिगम सूत्र प्रतिपत्ति ३।८५ ॥

टीका शाश्वता णमिती पूर्ववत् ते नरका द्रव्यार्थता तथाविधप्रतिनियतसंस्थानादिरूपतया वर्णपर्यायैर्गन्धपर्यायै स्पर्शपर्यायै पुनरशाश्वता, वर्णादीनामन्यथाऽन्यथाभवनात्, एवं प्रतिपृथिवि ताद्वक्तव्य यावदध सप्तमी पृथिवी ॥

मूलम्–'पउमवरवेइया णं भंते ! किं सासया असासया ? गोयमा ! सिय सासया सिय असासया ॥ से केणट्ठेण भंते ! एवं वुच्चइ–सिय सासया सिय असासया ?, गोयमा ! दव्वट्ठयाए सासया वण्णपज्जवेहिं गंधपज्जवेहि रसपज्जवेहिं फासपज्जवेहिं असासता, से तेणट्ठेणं गोयमा ! एवं वुच्चइ–सिय सासता सिय असासता ॥ पउमवरवेइया णं भंते ! कालओ केवच्चिर होति ?, गोयमा ! ण कयावि णासि ण कयावि णत्थि ण कयावि न भविस्सति ॥ भुविं च भवति य भविस्सति य धुवा नियमा सासता अक्खया अव्वया अवट्ठिया णिच्चा पउमवरवेदिया'' ॥

—श्री जीवाभिगम प्रतिपत्ति ३ देवाधिकार उद्देश १ सू० १२५॥

टीका—पउमवरवेइया णं भंते ! किं सासया ? इत्यादि, पद्मवरवेदिका णमिति पूर्ववत् किं शाश्वती उताशाश्वती ?, आवन्ततया सूत्रे निर्देशः प्राकृतत्वात्, किं नित्या उतानित्येति भाव, भगवानाह गौतम ! स्यात् शाश्वती स्यादशाश्वती कथञ्चिन्नित्या कथञ्चिदनित्येत्यर्थः, स्याच्छब्दो निपातः कथञ्चिदित्येतदर्थवाची ॥ 'से केणट्ठेणं भंते !' इत्यादि प्रश्नसूत्रं सुगमं भगवानाह—गौतम ! 'द्रव्यार्थतया' द्रव्यास्तिकनयमतेन शाश्वती, द्रव्यास्तिकनयो हि द्रव्यमेव तात्त्विकमभिमन्यते न पर्यायान्, द्रव्यं चान्वयि परिणामित्वात्, अन्यथा द्रव्यत्वायोगात्, अन्वयित्वाच्च सकलकालभावीति भवति द्रव्यार्थतया शाश्वती, 'वर्णपर्यायैः' तदन्यसमुत्पद्यमानवर्णविशेषरूपैरेवं गन्धपर्यायैः रसपर्यायैः स्पर्शपर्यायैः, लक्षणमेतत्तदन्यपुद्गलविचटनोच्चटनैश्चाशाश्वती,

पर्यायास्तिकनयमतेन पर्यायप्राधान्या

प्रतिक्षणं भावितया किंचन ।

णणट्ठे णं—मित्यादि

वादी स्वतन्त्र

सतो विनाशो,

वचनात्,

मूलम्–सासया णं ते णरगा दव्वट्ठयाए वण्णपज्जवेहिं गंधपज्जवेहिं रसपज्जवेहिं फासपज्जवेहिं असासया एव जाव अहे सत्तमाए ॥

--श्री जीवाभिगम सूत्र प्रतिपत्ति ३।८५ ॥

टीका शाश्वता णमिती पूर्ववत् ते नरका द्रव्यार्थता तथाविधप्रतिनियतसस्थानादिरूपतया वर्णपर्यायैर्गन्धपर्यायै स्पर्शपर्यायै पुनरशाश्वता, वर्णादीनामन्यथाऽन्यथाभवनात्, एवं प्रतिपृथिवि ताद्वक्तव्यं यावदध सप्तमी पृथिवी ॥

मूलम्–'पउमवरवेइया णं भते ! किं सासया असासया ? गोयमा ! सिय सासया सिय असासया ॥ से केणट्ठेण भंते ! एवं वुच्चइ–सिय सासया सिय असासया ?, गोयमा ! दव्वट्ठयाए सासया वण्णपज्जवेहिं गधपज्जवेहि रसपज्जवेहिं फासपज्जवेहिं असासता, से तेणट्ठेणं गोयमा ! एवं वुच्चइ–सिय सासता सिय असासता ॥ पउमवरवेइया णं भंते ! कालओ केवच्चिर होति ?, गोयमा ! ण कयावि णासि ण कयावि णत्थि ण कयावि न भविस्सति ॥ भुविं च भवति य भविस्सति य धुवा नियमा सासता अक्खया अव्वया अवट्ठिया णिच्चा पउमवरवेदिया'' ॥

—श्री जीवाभिगम प्रतिपत्ति ३ देवाधिकार. उद्देश १ सू० १२५॥

**टीका**—पउमवरवेइया गं भंते ! किं सासया ?, इत्यादि, पद्मवरवेदिका णमिति पूर्ववत् किं शाश्वती उताशाश्वती ?, आबन्ततया सूत्रे निर्देश प्राकृतत्वात्, किं नित्या उतानित्येति भाव, भगवानाह गौतम ! स्यात् शाश्वती स्यादशाश्वतीकथञ्चिन्नित्या कथञ्चिदनित्येत्यर्थ. स्याच्छब्दो निपात कथञ्चिदित्येतदर्थवाची ॥ 'से केणट्ठेणं भंते !' इत्यादि प्रश्नसूत्रे सुगम, भगवानाह—गौतम ! 'द्रव्यार्थतया' द्रव्यास्तिकनयमतेन शाश्वती, द्रव्यास्तिकनयो हि द्रव्यमेव तात्विकमभिमन्यते न पर्यायान्, द्रव्य चान्वयि परिणामित्वाद्, अन्यथा द्रव्यत्वायोगाद्, अन्वयित्वाच्च सकलकालभावीति भवति द्रव्यार्थतया शाश्वती, 'वर्णपर्यायै' तदन्यसमुत्पद्यमानवर्णविशेषरूपैरेवं गन्धपर्यायै रसपर्यायै स्पर्शपर्यायै, उपलक्षणमेतत्तदन्यपुद्गलविचटनोच्चटनैश्चाशाश्वती, किमुक्त भवति ? पर्यायास्तिकनयमतेन पर्यायप्राधान्यविवक्षायामशाश्वती, पर्यायाणां प्रतिक्षण भावितया कियतकालभावितया वा विनाशित्वात्, 'से एएणट्ठेण'—मित्यादि उपसहारवाक्य सुगम, इह द्रव्यास्तिकनयवादी स्वमतप्रतिस्थापनार्थमेवमाह—नात्यन्तासत उत्पादो नापि सतो विनाशो, 'नासतो विद्यते भावो, नाभावो विद्यते सत' इति' वचनात्, यो तु दृश्येते प्रतिवस्तु उत्पादविनाशौ तदाविर्भावतिरो भावमात्र यथा सर्पस्योत्फणत्वविफणत्वे, तस्मात्सर्वं वस्तु नित्यमिति ॥ एवं च तन्मतचिन्तायां सशय—किं घटादिवद्द्रव्यार्थ-

तया शाश्वती उतसकलकालमेवंरूपा इति, तत संशयापनोदार्थं भगवन्तं भूय पृच्छति—'पउमवरवेइया णं' मित्यादि, पद्मवर-वेदिका णमिति पूर्ववद् 'भदन्त !' परमकल्याणयोगिन् ! 'किय-च्चिर' कियन्त काजं यावद्भवति ?, एवं रूपा कियन्तं कालमव-तिष्ठते ! इति, भगवानाह—गौतम ! न कदाचिन्नासीत्, सर्वदै-वासीदिति भाव अनादित्वात्, तथा न कदाचिन्न भविष्यति, किन्तु भविष्यच्चिन्तायां सर्वदैव भविष्यतीति प्रतिपत्तव्य, अपर्यव-सितत्वात्, तदेवं कालत्रयचिन्तायां नास्तित्वप्रतिषेधं विधाय सम्प्रत्यस्तित्व प्रतिपादयति—'भुविं चे' त्यादि, अभूच्च भवति च भविष्यति चेति, एवं त्रिकालावस्थायित्वाद् 'ध्रुवा मेर्वादिवद् ध्रुवत्वादेव सदैव स्वस्वरूपे नियता, नियतत्वादेव च 'शाश्वती' शश्वद्भवनस्वभावा, शाश्वतत्वादेव च सततगङ्गासिन्धुप्रवाह-प्रवृत्तावपि पौण्डरीकह्रद इवानेकपुद्गलविचटनेऽपि तावन्मात्रान्य-पुद्गलोच्चटनसम्भवाद् 'अक्षया' न विद्यते क्षयो—यथोक्तस्वरूपा-कारपरिभ्रंशो यस्या साऽक्षया, अक्षयत्वादेव 'अव्यया' अव्यय-शब्दवाच्या, मनागपि स्वरूपचलनस्य जातुचिदप्यसम्भवात्, अव्य-यत्वादेव स्वप्रमाणेऽवस्थिता मानुषोत्तरपर्वताद् बहि समुद्रवत्, एव स्वस्वप्रमाणे सदाऽवस्थानेन चिन्त्यमाना नित्या धर्मास्ति-कायादिवत् ॥

# श्री पन्नवणा सूत्र

सूत्रम्–जीवे ण भंते! गतिचरमेण किं चरमे ?, गो० ! सिय चरमे सिय अचरमे, नेरइए णं भते ! गति-चरमेणं किं चरमे अचरिमे ?, गो० ! सिय चरमे सिय अचरमे एव निरंतर जाव वेमाणिए, नेरइया ण भते। गतिचरमेण किं चरिमा अचरिमा ?, गो० ! चरिमावि अचरिमावि, एवं निरन्तरं जाव वमाणिया। नेरइए ण भते! ठितीचरमेणं किं चरमे अचरमे, ?, गो० ! सिय चरमे सिय अचरमे, एव निरंतरं जाव वेमाणिया, नेरइयाणं भंते! ठितीचरमेणं किं चरमा अचरमा ?, गो० ! चरमावि अचरमावि, एव निरतर जाव वेमाणिया। नेरइये ण भते! भवचरमेणं किं चरमे अचरमे ?, गो० !

सिय चरमे सिय अचरमे, एव निरंतरं जाव वेमाणिया, नेरइया णं भंते! भवचरमेणं कि चरमा अचरमा ?, गो० ! चरमावि अचरमावि, एवं निरंतरं जाव वेमाणिया। नेरइए णं भंते! भासाचरमेणं कि चरमे अचरमे ?, गो० ! सिय चरमे सिय अचरमे, एव निरंतरं जाव वेमाणिए, नेरइया णं भंते! भासाचरमेणं किं चरमा अचरमा गो० ! चरमावि अचरमावि, एवं ज व एगिंदियवज्जा, निरंतरं जाव वेमाणिया। नेरइए ण भंते! आणापाणुचरमेणं किं चरमे अचरमे ?, गो० ! सिय चरमे सिय अचरमे, एवं निरंतरं जाव वेमाणिए, नेरइया णं भंते! आणापाणुचरमेणं कि चरमा अचरमा ?, गो० ! चरमा व, एवं निरंतरं ज.व वेमाणिया। नेरइए णं भते! आहारचरमेणं किं चरमे अचरमे ?, गो० ! मिय चरमे सिय अचरमे, एवं निरंतर जाव वेमाणिए, नेरइया ण भंते! कि चरमा अचरमा ?, गो० ! चरमावि अचरमावि, एव निरंतरं जाव वेमाणिया। नेरइए णं भंते! भावचरमेण कि चरमे अचरमे ?, गो० ! सिय चरमे सिय अचरमे, एव निरंतरं जाव वेमाणिया। भाव-

चमेण किं चरमा अचरमा ?, गो० !- चरमावि अचरमावि, एव निरतरं जाव वेमाणिया । नेरइए णं भंते ! वएणचरमेणं किं चरमे अचग्मे ?, गो० ! सिय चरमे सिय अचरमे, एवं निरंतरं जाव वे· माणिए, नेरइया णं भते ! वगणचग्मेणं किं चरमा अचरमा ?, गो० ! चरिमावि अचरिमावि, एवं निरतरं जाव वेमाणिया । नेरइए णं भंते ! गंध-चरमेणं किं चरमे अचरमे ?, गो० ! सिय चरमे सिय अचरमे, एव निरंतर जाव वेमाणिए, नेरइया णं भंते ! गंधचरमेण किं चरमा अचरमा ?, गो० ! चरमावि अचरमावि, एवं निरंतरं जाव वेमाणिया ! नेरइए णं भंते ! रमचरमेणं किं चरमे अचरमे ?, गो० ! सिय चरमे सिय अचरमे, एवं निरंतरं जाव वेमाणिए, नेरइयाणं भंते ! रसचरमेणं किं चरमा अचरमा ?, गो० ! चरमावि अचरमावि, एवं निरंतर जाव वेमाणिया । नेरइएणं भंते ! फास-चरमेणं किं चरमे अचरमे ?; गो० ! सिय चरमे सिय अचरमे, एवं निरंतरं जाव वेमाणिए नेरइयाणं भते ! फास चरमेणं किं चरमा अचरमा ?, गो० ! चरमावि अचरमावि एवं जाव वेमाणिया । संगहणि

गाहा—"गतिठिइभवे य भासा आणापाणुचरमे य बोद्धव्वा। आहारभावचरमे वण्णरसे गन्धफासे य ॥ १ ॥"

—श्री प्रज्ञापना सूत्र १०।१६० ॥

मूलम् जीवाणं भंते! किं भासगा अभासगा ?, गो० ! भासगावि अभासगावि, से केणट्ठेणं भंते ! एवं वुच्चति जीवा भासगावि अभासगावि ?, गो० ! जीवा दुविहा—प०, त० संसारसमावण्णगा य असंसारसमावण्णगा य तत्थ णं जे ते असंसारसमावण्णगा ते णं सिद्धा सिद्धा णं अभासगा, तत्थ णं जे ते संसारसमावण्णगा ते दुविहा—प०, तं—सेलेसीपडिवण्णगा य असेलेसीपडिवण्णगा य, तत्थ णं जे ते सेलेसिपडिवण्णगा ते णं अभासगा, तत्थ णं जे ते असेलेसिपडिवण्णगा, ते दुविहा—प०, तं—एगिंदिया य अणेगिंदिया य तत्थ णं जे ते एगिंदिया ते णं अभासगा, तत्थ णं जे ते अणेगिंदिया ते दुविहा—प०, तं—पज्जत्तगा य अपज्जत्तगा य, तत्थ णं जे ते अपज्जत्तगा ते णं अभासगा, तत्थ णं जे ते पज्जत्तगा ते णं भासगा, से एएणट्ठेणं गो० ! एवं वुच्चति—जीवा भासगावि अभासगावि । नेरइया

णं भते ! किं भासगा अभासगा ?, गोयमा ! नेरइया भासगावि अभासगावि ?, से केणट्ठेणं भते ! एव वुच्चति–नेरइया भासगावि अभासगावि ?, गो० ! नेरइया दुविहा–पं०, त०–पज्जत्तगा य अपज्जत्तगा य, तत्थ णं जे ते अपज्जत्तगा तेणं अभासगा, तत्थ णं जे ते पज्जत्तगा ते णं भासगा, से एएणट्ठेणं गो० ! एवं वुच्चति–नेरइया भासगावि अभासगावि, एवं एगिंदियवज्जाणं निरतर भाणियव्वं ॥

—श्री प्रज्ञापना सूत्र ११।१६६ ॥

# श्री जम्बूद्वीप पण्णत्ति सूत्र

मूलम्–'तीसे णं जगईए उप्पि बहुमज्झदेस भाए एत्थ णं महई एगा पउमवरवेइया पण्णत्ता, अद्धजोयण उड्ढं उच्चत्तेणं पंच धनुसयाइं विक्खंभेणं जगई समिया परिक्खेवेणं सव्वरयणामई अच्छा जाव पडिरूवा। तीसे णं पउमवरवेइयाए अयमेवारूवे वण्णावासे पण्णत्ते, तंजहा–वइरामया णेमा एवं जहा जीवाभिगमे जाव अट्ठो जाव धुवा णियया सासया जाव णिच्चा ॥

—श्री जम्बूद्वीप प्रज्ञप्ति सूत्र वक्षस्कार १२ सू० ४॥

टीका–पद्मवरवेदिकायाः शाश्वत नामधेयं प्रज्ञप्तमिति, अयमपिप्राय प्रस्तुतपुद्गलप्रचयविशेषे पद्मवरवेदिकेति शब्दस्य क्तिर्नाम निरपेक्षाऽनाद कालिना रूढि प्रवृत्तिनिमित्तमिति, पउम-

वरवेइया णं भंते,'ति पद्मवरवेदिका शाश्वती उताशाश्वती ? प्रत्ययेङ्गीर्न वा (श्री सि० ८-३-३१ इत्यनेन प्राकृत सूत्रेण ङीप्रत्ययस्यवैकल्पिकत्त्वेन आबन्ततयासूत्रे निर्देश , किं नित्या उत अनित्येतिभाव , भगवानाह—गौतम ! स्याच्छाश्वती स्यादशाश्वती, कथञ्चिद्नित्या कथञ्चिदनित्या, इत्यर्थ स्याच्छब्दोनिपात' कथञ्चिदित्येतदर्थ वाची, एतदेव सविशेष जिज्ञासु पृच्छति "से केणट्ठेण, मित्यादि" से श ब्दोऽथ शब्दार्थं सच प्रश्ने, केनार्थेन—केन कारणेन भदन्त । एवमुच्यते, यथास्याच्छाश्वती स्यादशाश्वतीति भगवानाह—गौतम द्रयार्थतया शाश्वती तत्र द्रव्य सर्वत्रान्वयि सामान्यमुच्यते, द्रवति—गच्छति तान् तान् पर्यायान् विशेषानिति वा द्रव्यमिति व्युत्पत्तो द्रव्यमेवार्थ —तात्त्विक पदार्थ प्रतिज्ञायां यस्य न तु पर्याया स द्रव्यार्थ ॥ द्रव्यमात्रास्तित्व प्रतिपादको नयविशेष तद्भावो द्रव्यार्थ तया—द्रव्यमात्रास्तित्त्व प्रतिपादक नयाभिप्रायेणेति यावत् शाश्वती, द्रव्यार्थिकनय मत पर्यालोचनाया मुक्त रूपस्य पद्मावरवेदिकाया आकारस्य सदाभावात् ? तथा वर्णपर्यायै कृष्णादिभि गधपर्यायै सुरभ्यादिभि रसपर्यायै तिक्तादिभि स्पर्शपर्यायै कठिनत्वादिभि अशाश्वती—अनित्या तेषा वर्णादीना प्रतिक्षण कियत् कालानन्तरं वाऽन्यथा भावनात् । अतादवस्थ्यस्य चानित्यत्वात् नचैवमपिभिन्नाधि करणे नित्यत्वानित्यत्वेद्रव्यपर्याययोर्भेदाभेदोपगमात्, अन्यथोभयो-

रप्यसत्वापत्ते तथाहि शक्यते वक्तु ंपरपरिकल्पित द्रव्यमसत्, पर्या-यतिरिक्तत्वात् बालत्वादिपर्याय शून्यवन्ध्या सुतवत्, तथा परपरि कल्पिता पर्याया असतोद्रव्यव्यरिरिक्तत्वात् वन्ध्यासुतगत्बाल-त्वादि पर्यायवत्, उक्तञ्च द्रव्यंपर्यायवियुतं पर्याया द्रव्यवर्जिता' क कदा केन कि रूपा' दृष्टा मानेन केन वा ॥ १ ॥ इति कृत प्रसङ्गेन "से एगणट्ठेग'मित्याद्युपसंहार वाक्य सुगमं, इह द्रव्या-स्तिकनयवादी स्वमत प्रतिष्ठापनार्थमेवमाह— नात्यन्तासत उत्पादो नापिसतो विद्यते विनाशो वा" नासतोविद्यते भावो नाभावो विद्यते सत', इति वचनात्, यौतुदृश्येते प्रतिवस्तु उत्पादविनाशौ तदा-विर्भावतिरोभावमात्रं यथा सर्पस्य उत्फणत्वविफणत्वे तस्मात् सर्ववस्तुनित्यामिति, एवञ्चतन्मतचिन्तायां संशय —किं घटादिवत् द्रव्यार्थतया शाश्वती उत् सकलकालमेवं रूपेति ? तत संशयापनो-दार्थं भगवन्तं भूय पृच्छति पउमरवेइया ण' मित्यादि, पद्मवर-वेदिका णमिति पूर्ववत् भदन्त परम कल्याणयोगिन्—कियच्चिर —कियन्त कालं यावद् भवति एवरूपा कियन्तं कालमवतिष्ठते इति भगवानाह—गौतम! न कदाचिन्नासीत् सर्वदैवासीदिति भाव अनादित्वात्, तथा न कदाचिन्न भवति सर्वदैव वर्तमान काल चिन्तायां भवतीति भाव, सर्वदैव भावात् तथा न कदाचिन्न भविष्यति, किन्तु भविष्यच्चिन्तायां सर्वदैव भविष्यतीति प्रति-पत्तव्यम्, अपर्यवसितत्वात्, तदेव कालत्रयचिन्तायां नास्तित्व

प्रतिषेध विधाय संप्रत्यस्तित्वं प्रतिपादयति "भुवि च इत्यादि अभूच्च भवति च भविष्यतिचेति एवं त्रिकालावस्थायित्वात् ध्रुवा, मेर्वादिवत् ध्रुवत्वादेव सदैव स्वस्वरूपेतिनियता, नियतत्वादेव च शाश्वती—शश्वद्भवनस्वभावा शाश्वतत्वादेव च सततगङ्गा-सिन्धुप्रवाह प्रवृत्तावपि पौण्डरीक (पद्म) ह्रद इवानेक पुद्गल विघ-टनेऽपि तावन्मात्रान्य पुद्गलोच्चटन सभवात्, अक्षया—न विद्यते क्षयो—यथोक्तस्वरूपाकारपरिभ्रंशो यस्या सा अक्षयत्वादेवाऽव्यया —अव्ययशब्दवाच्या, मनागपि स्वरूपचलनस्य जातुचिदप्य सम्भवात्, अव्ययत्वादेव स्वप्रमाणेऽवस्थिता मानुषोत्तरपर्वता-द्वहिः समुद्रवत्, एवं स्वस्वप्रमाणे सदावस्थानेन चिन्त्यमाना नित्या धर्मास्तिकायादिवत् ॥

मूलम्—जम्बुद्दीवे णं भन्ते ! दीवे किं सासए असासए ?, गोयमा ! सिअ सासए सिअ असासए, से केणट्ठेणं भन्ते ! एव वुच्चइ सिअ सासए सिअ असासए ?, गोयमा ! दव्वट्ठयाए सासए वण्णपज्जवेहिं गंध० रस० फासपज्जवेहिं असासए, से तेणट्ठेणं गो० ! एवं वुच्चइ—सिय सासए सिअ असासए । जम्बुद्दीवे णं भन्ते ! दीवे कालओकेवचिरहोइ ?, गोयमा ! ण कयावि णासि ण कयावि णत्थि ण कयावि ण भविस्सइ, भुविं च भवइ अ भविस्सइ अ धुवे णिइए

सासए अव्वए अवट्ठिए णिच्चे जम्बुद्दीवे दीवे पण्णत्ते इति ॥ सूत्र १७५ ॥

मूलम्—जम्बुद्दीवे णं भन्ते ! दीवे किं पुढविपरिणामे आउपरिणामे जीवपरिणामे पोग्गलपरिणामे ?, गोयमा ! पुढविपरिणामेवि आउपरिणामेवि जीवपरिणामेवि पुग्गलपरिणामेवि । जम्बुद्दीवे णं भन्ते ! दीवे सव्वपाणा सव्वजीवा सव्वभूआ सव्वसत्ता पुढविकाइअत्ताए आउकाइअत्ताए तेउकाइअत्ताए वाउकाइअत्ताए वणस्सइकाइअत्ताए उववण्णपुव्वा ?, गो० ! असइ अदुवा अणंतखुत्तो ॥

—श्री जम्बूद्वीप० व० ७ सूत्र १७५-१७६ ॥

टीका अथास्यैवशाश्वतभावादिक प्रश्नयन्नाह— जम्बूद्दीवेण" मित्यादि, इदञ्च यथा प्राक् पद्मवरवेदिकाधिकारे व्याख्यातं तथाऽत्र जम्बूद्वीप व्यपदेशेनत्रोध्यमिति, एवञ्च शाश्वता शाश्वतो घटो निरन्वयविनश्वरो दृष्टः किमसावपि तद्वत्? उत नेत्याह— जम्बूद्दीवे ण"मित्यादि, इदमपि प्राग् पद्मवरवेदिकाधिकारे व्याख्यातमिति । अथ किंपरिणामोऽसौद्वीप इतिपिपृच्छिषुराह—जम्बूद्दीवे ण भंते ! इत्यादिजम्बुद्वीपोभदन्त द्वीप किं पृथिवीपरिणाम, पृथिवीपिण्डमय किमप्परिणाम जलपिण्डमय, एतादृशोच स्कन्धावचित्तरज स्कन्धादिवद् जीवपरिणामावपि भवत इत्या-

शंक्याह—किं जीवपरिणाम —जीवमय घटादिरजीवपरिणामोऽपि भवती थाशंक्याह—कि पुद्गलपरिणाम —पुद्गलस्कन्धनिष्पन्नः केवलपुद्गलपिण्डमय इत्यर्थ, तेजसस्त्वेकान्तसुषमादावनुत्पन्नत्वेन एकान्तदुष्षमादौ तु विध्वस्तत्वेनजम्बुद्वीपेऽस्य तत्परिणामेऽङ्गीक्रियमाणे कादाचित्कत्वप्रसङ्ग वायोस्त्वतिचलत्वेन तत्परिणामे द्वीपस्यापि चलत्वापत्तिरिति तयो स्वत एव संदेहाविषयत्वेन न प्रश्नसूत्रे उपन्यास, भगवानाह—गौतम ! पृथिवीपरिणामोऽपि पर्वत दिमत्त्वात् अप्परिणामोऽपि नदीह्रदादिमत्त्वात्—यद्यपि स्वसमये पृथिव्यप् कायपरिणामत्वग्रहणेनैव जीवपरिणामित्वसिद्ध तथापि लोकेतयोर्जीवत्वस्याव्यवहारात् पृथग् ग्रहण वनस्पत्यादीनां-तु जीवत्व—व्यवहारः स्वपरसम्मत इति, पुद्गलपरिणामोऽपि मूर्तत्वस्य प्रत्यक्ष सिद्धत्वात्, कोऽर्थ ? जम्बुद्वीपोहि स्कन्धरूप पदार्थ सचावयवै समुदितैरेव भवति, समुदायरूपत्वात् समुदायिन इति अथयदि चाय जीवपरिणामस्तर्हि सर्वेजीवा अत्रोत्पन्नपूर्वा उतनेत्याशक्याह--"जम्बुद्वीपे ण भते" इत्यादि, जम्बुद्वीपे भदत ! द्वीपे सर्वे प्राणा द्वित्रिचतुरिन्द्रिया सर्वेजीवा—पञ्चेन्द्रियाः सर्वेभूता तरव सर्वे सत्त्वा पृथिव्यप्तेजोवायुकायिका,—अनेन च साव्यवहारिकराशिविपयकएवाय प्रश्न, अत्रादि निगोदनिर्गतानामेव प्राणजीवादिरूपविशेप पर्यायप्रतिपत्तो, पृथिवीकायिकतयाअप् कायिकतयाते उस्कायिकतया वायुकायिकतया वनस्पति-

कायिकतया उपपन्नपूर्वा—उत्पन्नपूर्वा ? भगवानाह—" हंत गोयमा' एवं गौतम ! यथैवप्रश्नसूत्रंतथैवप्रत्युच्चारणीयं पृथिवीकायिकतया यावत् वनस्पतिकायिकतया उपपन्नपूर्वा कालक्रमेण—संसारस्यानादित्वात्, न पुन सर्वे प्राणादयो जीवविशेषा युगपदुत्पन्ना सकलजीवानामेककालं जम्बुद्वीपेपृथिव्यादिभावेनोत्पादे सकलदेवनारकादि भेदाभावप्रसक्ते. नचैतदस्ति तथा जगत्स्वभावादिति, कियतोवारानुत्पन्ना इत्याह—असकृद्—अनेकश: अथवा अनन्तकृत्व —अनन्तवारान् संसारस्यानादित्वात ॥

# श्री उत्तराध्ययन सूत्र

मूलम्–धम्माधम्मागासा, तिन्निवि एए अणाइया।
अपज्जवसिया चेव, सव्वद्धं तु वियाहिया॥ ८॥
समएवि संतइं पप्प, एवमेव विआहिए। आएसं
पप्प साईए, सपज्जवसिएवि य॥ ९॥

—श्री उत्ताराध्ययन, बृहद्वृत्ति, अध्ययन, ३६ सूत्र ८–९॥

टीका–धर्मश्चाधर्मश्चाकाशं च धर्माधर्मकाशानि त्रीण्यप्येतानि, न विद्यन्ते आदिर्येषा मत्यनादिकानि, इत्यत कालात् प्रभृत्यमूनि प्रवृत्तानीत्यसम्भवात् न पर्यवसितान्यपर्यवसितान्यनन्तानीतियावत्, न हि कुतश्चित्कालात् परतएतानि न भविष्यन्तीति सम्भव, चैवौ प्राग्वत्, तथाच 'सर्वाद्धा' सर्वाकालं, कालात्यन्त संयोगे द्वितीया 'तु' अवधारणेऽत सर्वदा स्वस्वरूपापरित्यागतो नित्यानीतियावत्, 'व्याख्यातानि कथितानि, सर्वत्र लिङ्गव्यत्यय. प्राग्वत्, समयोऽपि 'सन्ततिम्' अपरापरोत्पत्तिरूपप्रवाहात्मिकां

'प्राप्य' आश्रित्य 'एवमेव' अनाद्यपर्यवसितत्वलक्षणेनैव प्रकारेण 'व्याख्यात' प्ररूपित, पठन्ति च 'एमेव संतइ पप्प समएवि'त्ति स्पष्टम, 'आदेश' विशेष प्रतिनियतव्यक्त्यात्मकं 'प्राप्य' अङ्गीकृत्य सादिक सपर्यवसित, 'अपि' समुच्चये 'च' पुनरर्थे भिन्नक्रमश्च देश। पुन प्राप्येतियोज्य, विशेषापेक्षया ह्यभूत्वाऽय भवति भूत्वा च न भवतीति सादिनिधन उच्यत इति सूत्रद्वयार्थ ॥

मूलम्—संतइं पप्प ते ऽणाई, अप्पज्जवसिआवि अ । ठिइं पडुच्च साइआ, सपज्जवसिआवि अ ॥

- श्री उत्तराध्ययन, बृहद्वृत्ति, अध्ययन, ३६, सू० १२ ॥

टीका—'सन्ततिम्' उक्तरूपा 'प्राप्य' आश्रित्य ते' इति स्कन्धा परमाणवश्च अणाइ'त्ति अनादयोऽपर्यवसिता अपिच, नहि ते कदाचितत्प्रवाहतो न भूता न वा भविष्यन्तीति, 'स्थितीं' प्रतिनियतक्षेत्रावस्थानरूपा 'प्रतीत्य' अङ्गीकृत सादिकाः सपर्यवसिता अपि च, तदपेक्षया हि प्रथमतस्तथाऽस्थित्वं वावतिष्ठन्ते अवस्थाय च न पुनर्न तिष्ठन्तीत्यभिप्राय ॥

# श्री नन्दी सूत्र

मूलम्-से कि त माइयं सपज्जवसिअ, अणाइय अपज्जवसिअ च ?, इच्चेइयं दुवालसंग गणिपिडगं वुच्छित्तिनयट्ठयाए साइअं सपज्जवसिअं, अवुच्छित्तिनयट्ठयाए अणाइअं अपज्जवसिअं, तं समासओ चउव्विहं पण्णत्तं, तंजहा-दव्वओ खित्तओ कालओ भावओ, तत्थ दव्वओ ण सम्मसुअं एग पुरिसं पडुच्च साइअ सपज्जवसिअं, बहवे पुरिसे य पडुच्च अणाइय अपज्जवसिअं, खेत्तओ ण पच भरहाइ पचेरवयाइ पडुच्च साइअं सपज्जवसिअ, पंच महाविदेहाइ पडुच्च अणाइय अपज्जवसिअ कालओ णं उस्सप्पिणि ओसप्पिणिं च पडुच्च साइअ सपज्जवसिअ, नो उस्सप्पिणिं नो ओसप्पिणिं च पडुच्च अणाइयं अपज्जवसिअं, भावओ ण जे जया जिणपन्नत्ता भावा

आघविज्जंति पराणविज्जंति परूविज्जंति दंसिज्जंति निदंसिज्जंति उवदंसिज्जति तया (ते) भावे पडुच्च साइअं सपज्जवसिअं, खाओवसमिअं पुण भावं पडुच्च अणाइअ अपज्जवसिअं। अहवा भवसिद्धि-यस्स सुयं साइयं सपज्जवसिअं च, अभवसिद्धियस्य सुयं अणाइयं अपज्जवसिअ (च) सव्वागासपएसग्गं सव्वागासपएसेहिं अणंतगुणिअं पज्जवक्खर निप्फ-ज्जइ, सव्वजीवाणंपि अ णं अक्खरस्स अणंतभागो निच्चुग्घाडियो, जइ पुण सोऽवि आवरिज्जा तेणं जीवो अजीवत्तं पाविज्जा, 'सुट्ठुवि मेहसमुदए होइ पभा चदसूराणं' । से त साइअं सपज्जवसिअं, सेत्तं अणाइयं अपज्जवसिअ ॥

श्री नन्दी सूत्र ४३ ॥

टीका—अथ किं तत्सादि सपर्यवासितमनादि अपर्यवसितंच ? तत्र सहादिनावर्तते इतिसादि, तथा पर्यवसानंपर्यवसित, भावे क्त प्रत्यय, सहपर्यवसितेनवर्तते इति सपर्यवसित, आदिरहित-मनादि, नपर्यवसितमपर्यवसित, आचार्य आह—इत्येतत् द्वादशा-ङ्गगणिपिटक "वोच्छित्ति नयट्ठाए" इत्यादिव्यवच्छित्ति प्रतिपादन-परोनयो व्यवच्छित्तिनय पर्यायास्तिकनय इत्यर्थ तस्यभावो व्यवच्छित्तिनयार्थता तयापर्यायापेक्षयेत्यर्थ किमित्याह—सादि-

गपर्यवसितं नारकादिभव परिणत्यपेक्षया जीव इव, "अवुच्छित्ति-नयट्टयाए"ति अव्यवच्छित्ति प्रतिपादनपरोनयोऽव्यवच्छित्ति-नयार्थोद्रव्यमित्यर्थ । तद्‌ भावस्तत्तातया द्रव्यापेक्षया इत्यर्थ, किमित्याह— अनादि अपर्यवसितं त्रिकालावस्थायित्वाज्जीववद्‌ अधिकृतमेवार्थ द्रव्यक्षेत्रादिचतुष्टयमाश्रित्य प्रतिपादयति ——तत्‌ श्रुतज्ञानं समासत सक्षेपेण चतुर्विधं प्रज्ञप्तं तद्‌यथा द्रव्यत क्षेत्रत कालत भावतश्च तत्र द्रव्यतो'ण' मितिवाक्यालंकारे सम्यक्‌श्रुतमेकंपुरुषं प्रतीत्यसादिसपर्यवसत कथमिति चेत ? उच्यते, सम्यक्त्वावाप्तौ तत प्रथमपाठतो वा सादि पुर्नमिथ्यात्वप्राप्तौ सति वा सम्यक्त्वे प्रमाद्‌भावतो महाग्लानत्वभावतो वा सुरलोकगमनसंभवतो वा विस्मृतिमुपागते केवलज्ञानोत्पात्तिभावतो वा, सर्वथा विप्रनष्टे सपर्यवसितं बहून्‌पुरुपान कालत्रयवर्तिन पुन प्रतीत्यानाद्यपर्यवसित सन्तानेन प्रवृत्तत्वात्‌ कालवत्‌ तथा क्षेत्रतो णमिति वाक्यालकारे पञ्चभरतानि पञ्चैरवतानि प्रतीत्य सादिसपर्यवसान, कथ ? उच्यते, तेपु क्षेत्रे ववसर्पिण्यां सुपमदुष्पमापर्यवसाने उत्सर्पिण्यान्तु सुपमा प्रारभे तीर्थंकरधर्मसघाना प्रथमतयोत्पत्तेःसादि, एकान्ते दुष्पमादौ च काले तदभावात्‌ सपर्यवसित, तथा महाविदेहान्‌ प्रतीत्यानाद्यपर्यवसित, तत्रप्रवाहापेक्षया तीर्थकरादीनामव्यवच्छेदात्‌, तथा कालतो ण'मिति वाक्यलकारे,

अवसर्पिणीमुत्सर्पिणीं च प्रतीत्य सादिसपर्यवसित, तथाहि अवसर्पिण्यातिसृस्वेव समासु सुषमदुष्षमादुष्मसुषमादु षमा-रूपामूत्सर्पिण्यां द्वयोः समयोः दुष्मम पुषमोसुपमदुष्माभ्रपयो-र्भवति न परत, तत सादिसपर्यवासितं, अत्रचोत्सर्पिण्यवसर्पिणी स्वरूपज्ञापनार्थं कालचक्र विशतिसागरोपम कोटा कोटीप्रमाण विनेयजनानुग्रहार्थं यथा मूलवृत्तिकृता दर्शितं तथावयमपिदर्श-याम –'चत्तारि सागरोवमकोडिकोडीउ सतईए उ। एगतसुस्समा-खलु जिणेहिं सव्वेहिंनिद्दिट्ठा ॥ १ ॥ छाया – चतस्र. सागरोपम कोटी कोट्य मतत्यातु। एकान्त सुषमा खलु जिनै सर्वैर्निर्दिष्टा ॥ १ ॥ तीएपुरिसाणमाऊ तिन्नि ज पलियाइं तह पमाणच। तिन्नेव गाउयाइं आइएभणांति समयन्नु ॥ २ ॥ छाया तस्या पुरुपाणमायु स्त्रीणिच पल्योपमानि तथा प्रमाणञ्च॥ त्रीण्यंव गव्यूतानि आदौ भणंति समयज्ञा ॥ ॥ २ ॥ उपभोगपरीभोगा जम्मंतर सुकयवीयजाया उ। कप्पतरूसमूहाओ होंति किलेस विणातेसि ॥ ३ ॥ छाया उपभोगपरीभोगा जन्मान्तर सुकृतवीजजातास्तु। कल्पतरुसमूहात् भवन्तिक्लेशंविनातेषाम ॥ ३ ॥ ते पुण दसप्पयाराकप्पतरू समणसमयकेऊहि। वीरेहिं-विनिद्दिट्ठा मणोरहा पूरगा एए ॥ ४ ॥ छाया—ते पुनर्दशप्रकारा कल्पतरव श्रमणसमयकेतुभि.। धीरैर्विनिर्दिष्टा मनोरथा पूरका एते ॥ ४ ॥ मत्तागया यभिंगा तुडिअगा दीव जोइ चित्तङ्गा। चित्तरसा मणियगा गेहागारा अणिय [गि] णाय ॥ ५ ॥

छाया—मत्ताङ्गदाश्चभृ गास्त्रटिताङ्गादीपज्योतिश्चित्राङ्गा । चित्र-रसामण्यङ्ग गृहाकारा अनग्नाश्च ॥ ५॥ मत्तंगएसु मज्जभायणाणि-भिंगेसु । तुडियगेसु य संगयतुडियाणि बहुप्पगाराणि ॥ ६ ॥ छाया – मत्ताङ्गदेपु मद्य सुखपेयं भाजनानिभृंगेषु । त्रुटितागेपुच स्वगतत्रुटितानि बहुप्रकाराणि ॥ ६ ॥ दीवसिहा जोइसनामया य निच्च करति उज्जोयं । चित्तंगेसु यमल्लं चित्तरसा भोयणट्ठाए ॥ ७ ॥ छाया—दीपशिखा ज्योतिर्नामकाश्च नित्यकुर्वन्त्युद्योतम् । चित्रागेपु च माल्यचित्ररसाभोजनार्थाय ॥ ७ ॥ मणियंगेसु य भूसणवराणि भवणाणि भवणरुक्खेसु । आइण्णे [अणिगिणे] सु य इच्छियवत्थाणि बहुप्पगाराणि ॥ ८ ॥ छाया--मण्यंगेपुच-भूषणवराणि भवनानि भवनवृक्षेपु । आकीर्णेपु चेप्सितानि च [प्राथितानि] वस्त्राणि बहुप्रकाराणि ॥ ८ ॥ एएसु य अन्नेसु य नरनारिगणाण ताणमुवभोगा भवियपुणब्भवरहिया इय सव्वण्णू जिणा विंति ॥ ९ ॥ छाया—एतेपुचान्येपु च नरनारी गणाना तेषामुपभोगा । भाविपुनर्भवरहिता इति सर्वज्ञाजिना ब्रुवते ॥ ९ ॥ तोतिण्णि सागरोवमकोडाकोडीउवीयरागेहिं । सुसमत्ति समक्खाया पवाहरूवेण धीरेहिं ॥ १० ॥ छाया—तत-स्तिस्त्र सागरोपमकोटीकोटीमाना वीतरागैः । सुषमेतिसमाख्याता प्रवाहरूपेणधीरै ॥ १० ॥ तोए पुरिसाणमाउं दोन्नि उ पलियाइंतह पमाणंच । दो चेव गाउयाइ आइण्ण भणंति समयन्नु ॥ ११ ॥

छाया—तस्यां पुरुषाणामायु द्वेतु पल्योपमे तथा प्रमाणं च। द्वे एव गव्यूते आदौभणति ससमयज्ञाः ॥ ११ ॥ उवभोगपरिभोगा तेसिपि य कप्पपायवेहितो । होंति किलेसेण विनापायं पुण्णाणुभावेण ॥ १२ ॥ छाया—उपभोगपरिभोगास्तेषामपि च कल्प पादपेभ्य । भवन्तिक्लेशेन विना प्राय पुण्यानुभावेन ॥ १२ ॥ तो सुसमदुस्समाए पवाहरूवेण कोडिकोडीओ । अयराण दोत्रि सिद्धाजिणेहि जियरागदोसेहिं ॥ १३ ॥ छाया—तदासुषमदुष्षमायां प्रवाहरूपेण कोटीकोट्यौ ॥ अतरयोर्द्वे शिष्टे जिनैर्जितरागद्वेषै ॥ १३ ॥ तीए पुरिसाणमाउं एग पलिअ तहा पमाणंच। एगच गाउय तीए आईए भणंति समयन्नु ॥१४॥ छाया—तस्या पुरुषाणा आयुरेकं पल्योपम तथा प्रमाण च एक च गव्यूतं तस्यां पुरुषाणा आदौभणंति समयज्ञा ।१४॥ उवभोगा तेसिंपि य कप्पपायवेहितो। होंति किलेसणाविणा नवर पुण्णाणुभावेणं ॥ १५ ॥ छाया उपभोगपरिभोगा स्तेषामपि च कल्पपादपेभ्य । भवन्तिक्लेशेनविना नवरं पुण्यानुभावेन ॥ १५ ॥ सूसमावसेसे पढमजिणो धम्मनायगो भयव । उप्पणो सुहपुण्णो सिप्पकला-दंसओ—उसभो ॥ १६ ॥ छाया—सुषमदुष्षमावशेषे प्रथम जिना धर्मनायकोभगवान । उत्पन्न पूर्णशुभ शिल्पकलादर्शकोवृषभ ॥ १६ ॥ तो दुस्समसुस्समुणा बायालीसाइ वरिससहस्सहिं । सागर-कोडाकोडीएमेवजिणेहिं पण्णत्ता ॥ १७ ॥ छाया—तत दुष्षम-सुषमा ऊना द्विचत्वारिंशता वर्षसहस्त्रै । सागरोपमकोटीकोटी

संक्षेपेण महार्थोविशेष सूत्रादवज्ञातव्य ॥ २३ ॥ "नोउसप्पिणी" त्यादि, नोत्सर्पिणीमवसर्पिणीं प्रतीत्यानाद्यपर्यवसितं, महाविदेहेषु हि नोत्सर्पिण्यवसर्पिणीरूप काल । तत्र च सदैवावस्थित सम्यक् श्रुतमित्यनाद्यपर्यवसित, तथाभावतो 'णमितिवाक्यालकारे, 'ये' इत्यानि-र्दिष्टनिर्देशे ये केचन यदा पूर्वाह्णादौ जिनैं प्रज्ञप्ताजिन-प्रज्ञप्ता भावा —पदार्था 'आघविज्जति' ति प्राकृतत्त्वादाख्यायन्ते, सामान्यरूपतया विशेषरूपतया वा कथ्यन्ते इत्यर्थ प्रज्ञाप्यन्ते नामादिभेदप्रदर्शनेनाख्ययन्ते, तेषा नामादीना भेदा-प्रदर्श्यन्ते तत्यर्थ, प्ररूप्यन्ते नामादभेदस्वरूपकथनेन प्रख्यायते नामादीना भेदाना स्वरूपमाख्यायने इति भावाथ, यथा—"पज्जा-याणभिधेय ठियमन्नत्थे तदत्थनिरवेक्खं । जाइच्छियं च नाम जाव दव्व च पाएण ॥ १ ॥ छाया—पर्यायानभिधेय स्थितमन्यार्थेतदर्थनिरपेक्षम् । यादृच्छिकंच नाम यावद्द्रव्यञ्च प्रायेण ॥ १ ॥ जपुण तदत्थसुन्न तदभिप्पाएण तारिसागार । कीरइ व निरागारं इत्तरमियर च सा ठवणा । २ ॥ छाया—यत्पुनस्तदर्थशून्य तदभिप्रायेणतादृशाकारम् । क्रियतेवा निराकारमित्वर-मित्तरञ्च सा स्थापना ॥ २ ॥" इत्यादि, तथा-दर्श्यन्त – उपमानमात्रोपदर्शनेन प्रकटीक्रियन्ते, यथा गौरिव गवय, इत्यादि, तथा निदर्श्यन्ते——हेतुदृष्टान्तोपदर्श-नेन स्पष्टतरीक्रियन्ते, उपदर्श्यंते —उपनयनिगमनाभ्या नि शंक शिष्यबुद्धौ स्थाप्यन्ते, अथवा उपदर्श्यंते—सकलनयाभिप्रायावता-

रणात पटुप्रज्ञशिष्यबुद्धिषु व्यवस्थाप्यन्ते, तान् भावान 'तदा' तस्मिन् काले तथा ऽऽख्यायमानान् प्रतीत्य सादिसपर्यवसित, एतदुक्तं भवति तस्मिन काले त न प्रज्ञापकोपयोग स्वरविशेष प्रयत्नविशेष नामनाविशेप मङ्गविन्यासादिक च प्रतीत्य सादिसपर्यवसिनम्, उपयोगादे प्रतिकालमन्यथाऽन्यथाभवनात उक्तं च — 'उपयोगपरपयत्ता आसणभेयाइया य पइसमयं । भिणा पण्णवगस्सा साइयसपज्जतय तम्हा' ॥ १ ॥ क्षायोपशमिकभाव पुन प्रतीत्यानाद्यवसित, प्रवाहरूपेण क्षायोपशमिक भावस्यानाद्यपर्यवसितत्वात्, अथवाऽत्र चतुर्भंगिका, तद्यथा—सादिसपर्यवसितं १ साद्यपर्यवसित २ मनादिसपर्यवसित ३ मनाद्यपर्यवसित च ४, तत्र प्रथमभंगप्रदर्शनायाह—'अथवे' त्यादि, अथवेति प्रकारान्तरोपदर्शने भवसिद्धिकोभव्यस्तस्य सम्यक् श्रत सादि (स) पर्यवसितं, सम्यक त्वलाभे प्रथमतयाभावात् भूयोमिथ्यात्वप्राप्तौ केवलोत्पत्तौ वा विनाशात्, द्वितीयस्तु भंग शून्यो, नहि सम्यक् श्रुत मिथ्याश्रुत वा सादि भूत्वाऽपर्यवसितं सभवति, मिथ्यात्वप्राप्तौ केवलोत्पत्तौ चाऽवश्य सम्यक् श्रुतस्यविनाशात्, मिथ्याश्रतस्यापि च सादेरवश्य कालान्तरे सम्यक्त्वावाप्तावभावात् इति, तृतीयभङ्गस्तु मिथ्याश्रुतापेक्षयावेदितव्य, तथाहि—भव्यस्यानादिमिथ्यादृष्टेर्मिथ्याश्रुतमनादि सम्यक्त्वावाप्तौ च तदपयातीति सपर्यवसित, चतुर्थभङ्गकं पुनरुपदर्शयति— अभव्ये

त्यादि, अभवसिद्धिक—अभव्यस्तस्य श्रुत मिथ्याश्रुतमनाद्य-पर्यवसित, तस्य सदैव सम्यक्त्वादिगुणहीनत्वात्, एषा चतुर्भंगिका यथाश्रुतस्योक्तातथामतेरपिद्रष्टव्या, मतिश्रुतयोरन्योन्यानुगतत्वात्, केवलमिहश्रुतस्य प्रक्रान्तत्वात्साक्षात्तस्यैव दर्शिता, अत्राह—ननुतृतीयभगे चतुर्थभगेवा श्रुतस्यानादिभाव उक्त, सच जघन्य उत मध्यम आहोस्विदुत्कृष्ट ?, उच्यते, जघन्यो मध्यमोवा न तूत्कृष्टो, यतस्तस्येद मान—'सव्वागासे' त्यादि, सर्वं च तदाकाश च—सर्वाकाश, लोकाकोकाकाशमित्यर्थ, तस्य प्रदेशा—निर्विभागाभागा सर्वाकाशप्रदेशास्तेषामग्र—प्रमाण सर्वाकाशप्रदेशाग्र तत् सर्वाकाशप्रदेशैरनन्तगुणितम्—अनन्तशोगुणितमेकैकस्मिनआकाशप्रदेशेऽनन्तागुरुलघुपर्यायभावात्, पर्यायाग्राक्षर निष्पद्यते—पर्यायपरिमाणाक्षर निष्पद्यते, इयमत्र भावना—सर्वाकाशप्रदेशपरिमाण सर्वाकाशप्रदेशैरनन्तशोगुणित यावत् परिमाण भवति तावत् प्रमाण सर्वाकाशपर्यायाणामग्र भवति, एकैकस्मिन्नाकाशप्रदेशे यावन्तो ऽ गुरुलघु पर्यायास्ते सर्वेऽपि एकत्रपिण्डिता एतावन्तो भवन्तीत्यर्थ, एतावत् प्रमाण चाक्षर भवति, इह स्तोकत्वा धर्मास्तिकायादय साक्षात् सूत्रे नोक्ता, परमार्थतस्तेऽपि गृहीताद्रष्टव्या, ततोऽयमर्थ—सर्वद्रव्यप्रदेशाग्र सर्वद्रव्यप्रदेशैरनन्तशोगुणितं यावत परिमाण भवति तावत प्रमाणं—सर्वद्रव्यपर्याय परिमाण,—एतावत् परिमाणं चाक्षरं

भवति, तदपि चाक्षरद्विधाज्ञानमकारादिवर्णजातञ्च, उभयत्रापि अक्षरशब्दप्रवृत्ते रूढत्वात्, द्विविधमपि चेह गृह्यते, विरोधाभावात्, ननु ज्ञानंसर्वद्रव्यपर्य्यायपरिमाणं सम्भवतु, यतो ज्ञानमिहाविशेषोक्तौ सर्वद्रव्यपर्यायपरिमाणतुल्यताऽभिधानात् प्रक्रमाद् वा केवलज्ञानं गृह्यते, तच्च सर्वद्रव्यपर्यायपरिमाणं घटतएव, तथाहि—यावन्तो जगतिरूपिद्रव्याणां ये गुरुलघुपर्याया ये च रूपिद्रव्याणामरूपिद्रव्याणां वाऽगुरुलघुपर्यायास्तान सर्वानपि साक्षात् करतलकलित मुक्ताफलमिव केवलालोकेन प्रतिक्षणमवलोकते भगवान, नच येन स्वभावेनैकंपर्यायं परिच्छिनन्ति तेनैव स्वभावेन पर्यायान्तरमपि, तयो पर्याययोरेकत्त्वप्रसक्ते, तथाहि—घटपर्यायपरिच्छेदनस्वभावं यज्ज्ञानं तद्यदा पटपर्याय परिच्छेत्तुमलं तदा पटपर्यायाणामपि घटपर्यायरूपत्तापत्ति अन्यथा तस्यतत्परिच्छेदकत्त्वानुपपत्ते., तथा रूपस्वभावाभावात्, ततो यावन्त परिच्छेद्या पर्याया स्तावन्त परिच्छेदकास्तस्य केवलज्ञानस्य स्वभावा वेदित्तव्याः, स्वभावाश्च पर्यायास्तत पर्यायानधिकृत्य सर्वद्रव्यपर्यायपरिमाणं केवलज्ञानमुपपद्यते, यदकारादिकं वर्णजातं तत् कथ सर्वद्रव्यपर्यायपरिमाणंभवितुमर्हति ?, तत्पर्यायराशे सर्वद्रव्यपर्यायाणामनन्ततमे भागे वर्तमानत्वात्, तदयुक्त, अकारादेरपिस्वपरपर्यायभेदभिन्नतया सर्वद्रव्यपर्यायपरिमाणतुल्यत्वात्, आह च भाष्यकृत्—"एक्केक्कमक्खरं पुण सपरपज्जायभेदओ

भिन्न। तं सव्व दव्वपज्जायरासिमाण मुणेयव्वं ॥ १ ॥ छाया—एकैकमक्षरपुन. स्वपरपर्यायभेदतोभिन्न । तत् सर्वद्रव्यपर्याय-राशिमानं ज्ञातव्यं ॥ १ ॥" अथकथस्वपरपर्य्यायापेक्षया सर्व व्य-पर्यायराशितुल्यता ?, उच्यते, इह अ अ अ इत्युदात्तोऽनुदात्त. स्वरितश्च, पुनरप्येकैकोद्विधा—सानुनासिकोनिरनुनासिकश्चेत्यका-रस्यपड्भेदा, तांश्चपड्भेदान् अकार केवलो लभते, एवककारे-णापि संयुक्तो लभते पड्भेदान्एवं खकारेण एव यावद्धकारेण, एवमेकैककेवलव्यञ्जनसंयोगे यथा पट् २ भेदान् लभते तथा सजातीय विजातीयव्यनञ्जद्विकसंयोगेऽपि, एव स्वरान्तर संयुक्त तत्तद्व्यञ्जनसहितोऽप्यनेकान भेदान लभते, अपिच—एकैको-ऽप्युदात्तादिकोभेद' स्वरविशेपादनेकभेदोभवति, वाच्यभेदादपि समानवर्णश्रेणिकस्यापि शब्दस्यभेदो जायते, तथाहि—न येनैव स्वभावेन करशब्द हस्तमाचष्टे तेनैव स्वभावेन किरणमपि, किन्तु स्वभावभेदेन, तथाऽकारोऽपि तेनतेन ककारादिना सयुज्यमानस्तं तमर्थं ब्रुवाणोभिन्नस्वभावो वेदितव्य, ते च स्वभावा अनन्ता-ज्ञातव्या, वाच्यस्यानन्तत्वात्, एते च सर्वेऽप्यकारस्य स्वपर्याया, शेषास्तु सर्वेऽपि घटादिपर्याया आकारादिपर्यायाश्च परपर्याया, ते च स्वपर्यायेभ्योऽनन्तगुणा तेऽपि चाकारस्य सम्बधिनोद्रष्टव्या., आहच— ये स्वपर्यायास्ते तस्य सम्बन्धिनो भवन्तु, ये तु परपर्या-यास्ते विभिन्नवस्त्वाश्रयत्वात् कथं तस्यसम्बन्धिनोव्यपदिश्यंते ?,

